# CREATE your own Toons!!

FREE
Funfaces sticker






Colouring has never been so much of fun.
And now there's more...
Mix 'n Match and create your own Toons with the New Funfaces sticker free along with every pack of

# चन्दमामा



सम्पुटः - १५ जनवरी - २००० सञ्चिका - २

## अन्तरङ्गम्



Printed and Published by B. Viswanatha Reddi at B.N.K Press Pvt. Ltd., Chennai-600 026 on behalf of Chandamama India Limited, Chandamama Buildings, Vadapalani, Chennai-600 026. Editor: Viswam

### एतस्य अङ्कस्य विशेषाः











प्रतिकृतिमूल्यं रू. १०
वार्षिकं ग्राहकशुल्कं रू.१२०

Founded by
CHAKRAPANI
B. NAGI REDDI
Editor
VISWAM
Editorial Advisors
RUSKIN BOND
MANOJ DAS
Designing & Technical Advisor
UTTAM
Publisher
B. VISWANATHA REDDI
Director Marketing
V. MADHUSUDHAN

**HEAD OFFICE**
Chandamama Buildings
Vadapalani, Chennai-600 026
Tel: 4841778 Fax: 4835298

**OTHER OFFICES**

BHUBANESWAR
116-B, B.D.A, Duplex House
Baramunda
Bhubaneswar-751 003
Orissa. Phone: 55 0534

DELHI
Flat No. 415, 4 th Floor
Pratap Bhawan
5, Bahadurshag Zafar Marg
New Delhi-110 002.
Phone: 2270199

MUMBAI
2/B Naaz Buildings
Lamington Road,
Mumbai-400 004
Phone: 3889763-3886324-3877110
Fax: 3889670



# भवतु शुभोदर्कः

समग्रे प्रपञ्चे दृश्यते - नवः परिस्पन्दः, अपूर्वः उत्साहः, विलक्षणा निरीक्षा च । तस्य कारणम् - अपूर्वस्य कालस्य प्राप्तिः । नूतनस्य शतकस्य शुभारम्भकालः सन्निहितः अस्ति, स च नूतनस्य सहस्रकस्य आरम्भकालः अपि ! एतादृशे विशिष्टे अवसरे कस्य वा मनः सोत्कण्ठं न भवेत् ?

द्विसहस्रतमं वर्षं गतशतकस्य (२० तमशतकस्य) अन्तिमवर्षत्वेन परिगणनीयम्, उत आगामिशतकस्य (२१ तमशतकस्य) आरम्भवर्षत्वेन भावनीयम् इत्यत्र अस्ति विवादः । किन्तु नायं महत्त्वपूर्णः । वयं तु तं वत्सरम् उभयोः शतकयोः योजकं सेतुरूपं भावयामः ।

अग्रिमं शतकं सहस्रकं च वयं यत् सोत्कण्ठं पश्यामः तस्य को हेतुः ? अस्ति कश्चन हेतुः । अस्माकं मनसि अस्ति शुभोदर्कस्य अपेक्षा, उज्ज्वलभविष्यतः निरीक्षा ! विंशतितमे शतके मानवेन सम्मुखीकृतानि बहूनि दौर्भाग्यानि । तेषु कानिचन मानवकृतानि । तानि यथा - जागतिकयुद्ध-भारतविभाग-प्रभृतीनि । पुनः कानिचन दैवकृतानि । तानि यथा - भूकम्प-झञ्झावातादीनि । झञ्झावातेन ओरिस्साराज्ये कृताः उत्पाताः अस्माकं स्मृतिपथे स्युरेव । एतस्मिन् एव शतके मानवेन विशिष्टाः सिद्धयः अपि आसादिताः । ताश्च - विश्वसंस्थायाः स्थिरता, अण्वस्त्रप्रयोगनिषेधविषये चिन्तनम् इत्यादयः । प्राकृतिकविकोपसमये अपि यः अनुकम्पप्रवाहः काले काले दृष्टः, सोऽपि अपूर्वः एव ।

भाविनि काले मानवीयभावनानां परिपुष्टिः, परस्परस्नेहविश्वासादयः, विश्वभ्रातृत्वादयः च विलसन्तु इति आशास्महे वयम् ।

*संस्थापकौ -*

***चक्रपाणिः***

***बि.नागिरेड्डी*** च






## *पाकिस्थानं, यत्र प्रजाप्रभुत्वं रोदिति .....*

अखण्डं भारतं १९४७ तमे वर्षे द्विधा विभक्तम् । तदा प्रमुखः भागः भारतत्वेन अतिष्ठत् । कश्चन भागश्च पाकिस्थानत्वेन नाम प्राप्नोत् ।

अनन्तरकाले भारतं गणतन्त्रराष्ट्रत्वम् अरक्षत् । सर्वमतसमभावं च अपालयत् । किन्तु पाकिस्थानं १९५६तमे वर्षे स्वस्य इस्लामिक्प्राधान्यम् अघोषयत् ।

स्वातन्त्र्यप्राप्तिकाले उभाभ्याम् अपि देशाभ्यां सङ्कल्पितम् आसीत् यत् प्रजाप्रभुत्वं रक्षणीयम् इति । काले काले निर्वाचनं कृत्वा कैः कीदृशं शासनं करणीयम् इति निर्णेतव्यम् इत्यपि सङ्कल्पितम् आसीत् । प्रजाप्रभुत्वपद्धतौ केचन दोषाः सन्ति एव । तथापि अत्र प्रजाः एव प्रभवः भवन्ति इति तु एतस्य वैशिष्ट्यम् । आत्मना निर्मितान् एव नियमान् प्रजाः काले काले शान्तियुतमार्गेण परिवर्तयितुम् अर्हन्ति । किन्तु अधिकारपिपासायुक्तः जनः यदि शासकः भवेत् तर्हि सङ्घर्षं विना तस्य सन्मार्गे प्रवर्तनं क्लेशाय एव भवेत् ।

अद्यापि प्रजाप्रभुत्वं सर्वमतसहभावः च अक्षुण्णतया तिष्ठति इत्येतत् एव भारतस्य वैशिष्ट्यम् । वस्तुतः प्रजाप्रभुत्वयुक्तदेशेषु सुविशालः देशः भारतम् एव । दौर्भाग्यवशात् पाकिस्थाने एषा स्थितिः न दृश्यते । १९५८ तमे वर्षे अयूबखानवर्यः अधिकारसूत्रं बलात् गृहीतवान् । संविधाने परिवर्तनम् आनीय अध्यक्षपदम् अधिरूढः सः सर्वाधिकारी संवृत्तः । किन्तु १९६९तमे वर्षे याह्याखानवर्यः तं पराजितवान् ।

१९७१तमे वर्षे पूर्वपाकिस्थानवासिनां विषये महत् दौर्जन्यम् आचरितम् । लक्षशः हिन्दवः मुस्लिमाः च निराश्रयाः सन्तः भारतं शरणं गताः । तदा भारतेन अनन्यगतिकतया एतद्विषये अवधानं दातव्यम् अभवत् । बाङ्ग्लादेशीयानां प्रार्थनां पुरस्कृत्य भारतीयसैन्येन ढाकानगरम् आक्रान्तम्, पाकिस्थानसैन्यं यथयोग्यं दण्डितं च । ततः स्वतन्त्रस्य बाङ्ग्लादेशस्य उदयः जातः ।

बन्दिरूपण गृहीतः याह्याखानवर्यः राजकीयनेत्रे भुट्टोवर्याय समर्पितः १९७७ तमे वर्षे । तदनन्तरकाले झिया-उल-हक्वर्यः अधिकारसूत्रं गृहीतवान् । तेन प्रतिज्ञातं यत् प्रजाप्रभुत्वम् अचिरात् एव पुनः प्रतिष्ठापयिष्यते इति । किन्तु तेन स्ववचनं न पालितम् । हननप्रकरणसम्बन्धं निमित्तीकृत्य तेन भुट्टोवर्यः शूलम् आरोपितः ।

१९८८तमे वर्षे प्रवृत्ते विमानापघाते झिया

उल हक् मरणं प्राप्नोत् । तदा प्रवृत्ते निर्वाचने 'पाकिस्थान पीपल पार्टी' इत्येतस्य पक्षस्य नायिका भुट्टोवर्यस्य पुत्री बेनझीर'भुट्टो विजयं प्राप्य प्रधानमन्त्रिणी जाता । किन्तु तस्याः शासनं दीर्घकालं यावत् न अनुवृत्तम् । राष्ट्राध्यक्षः गुलामइसाक्खान्वर्यः तां पदच्युतां कृतवान् । अनन्तरकाले (१९९० तमे वर्षे) प्रवृत्ते निर्वाचने नवाजशरीफवर्यस्य नेतृत्वेन युक्तः इस्लामिजाम्हूरीपक्षः जयं प्राप्नोत् । सः अपि १९९३तमे वर्षे पदात् च्यावितः राष्ट्राध्यक्षेण । तस्मिन् एव वर्षे प्रवृत्ते निर्वाचने, बेनझीरभुट्टोवर्यायाः पक्षः जयं प्राप्नोत्, सा च प्रधानमन्त्रिणी अभवत् । साऽपि यदा पदात् च्याविता तदा, तन्नाम १९९७तमे वर्षे, नवाझशरीफः पुनरपि प्रधानमन्त्री जातः ।

१९९९तमवर्षस्य अक्टोबर्मासस्य १२ दिनाङ्के सेनामुख्यः परवझ्मुशरफ्वर्यः, यश्च पूर्वं प्रधानमन्त्रिणा पदात् च्यावितः आसीत् सः, अधिकारसूत्रं बलात् स्वीकृत्य शरीफवर्यं कारागारे निक्षिप्तवान् । तदुपरि बहवः दुर्व्यवहाराः आरोपिताः च ।

पाकिस्थाने यत् प्रवृत्तं तद्विषये विश्वनायकाः विशेषचिन्तनं कृतवन्तः न दृश्यन्ते । शरीफवर्यः स्वधिकारानुगुणम् एव व्याहृतवान् । कञ्चित् अधिकारिणं पदात् च्यावयितुं प्रधानमन्त्रिणः अधिकारः अस्ति एव । किन्तु मुशरफ्वर्यः सङ्घर्षं यत् कृतवान् तत् संविधनस्य प्रजाप्रभुत्वस्य च विरोधि आसीत् । उच्चाधिकारी अपि कोऽपि प्रधानमन्त्रिणं पदच्युतं कर्तुं न अर्हति । शरीफः दोषी उत मुशरफः इत्येषः अत्र न चर्चाविषयः । कश्चन सैन्याधिकारी संविधानं प्रजाप्रभुत्वं च विरुध्य प्रधानमन्त्रिणं पदच्युतं कृतवान् यत् तत् किं न्याय्यम् ? इति तु विश्वनायकैः सगाम्भीर्यं चिन्तनीयम् । मुशरफस्य व्यवहारं खण्डयितुं यत्किञ्चित् करणीयं तैः ।





# चन्दमामा




अर्धशतकात् अधिककालं यावत् चन्दमामा भारतीयबालानां विषये इन्द्रचापसेतुः इव व्यवहरन्ती अस्ति । तत्तद्बालस्य बालायाः वा मातृभाषया एव कथाः कथयन्ती युगपत् द्वादशभिः भाषाभिः प्रकाश्यते एषा आंग्लीं संस्कृतं च अविहाय ।... कोटिशः बालैः, तत्पालकैः च 'अपूर्वः स्तुस्त्यर्हः प्रयोगः' इति प्रशंसिता अस्ति एषा ।

**नूतनशतकं नूतनसहस्रकं च निमित्तीकृत्य भवताम् एषा चन्दमामा नवदिगन्तं लक्ष्यीकृत्य अग्रे गच्छन्ती अस्ति ।**

भारतस्य कथाकथयितृषु सुप्रसिद्धौ रस्किन् बाण्ड्, मनोजदासः च एतस्याः सम्पादने परामर्शदातारौ भवतः ।...

**प्रतीक्ष्यताम्, अत्युत्तमविषयवैविध्यं परिशील्यताम् ....**

**चन्दमामा 2000**

- भारतीया परम्परा

प्रपञ्चे बह्व्यः नागरिकताः अभवन् । किन्तु भारते यादृशी नागरिकता संस्कृतिः वा आ सहस्रवर्षेभ्यः अनुवर्तमाना अस्ति तादृशी न दृश्यते अन्यदेशेषु । एषा सांस्कृतिकधारा कथम् अविच्छन्नतया प्रवहति ? विविधाः आख्यायिकाः, इतिहासगतानां महापुरुषाणां व्यक्तिचित्राणि च एतत् रहस्यम् उद्भेदयन्ति ।

- भारतम् - पूर्वम् इदानीं च

गौहातीनगरं पूर्वं प्राग्ज्योतिषपुरम् इति किमर्थं निर्दिश्यते स्म ? यत्र पूर्वं विकीर्णबिन्दवः इव केचन भूप्रदेशाः आसन्, तत् मुम्बयीनगरं कथं महानगरत्वेन विकसितं जातम् ? दीर्घजीवनयुक्तानि नगराणि भारते एव अधिकप्रमाणेन सन्ति । तादृशानां नगराणाम् इतिहासः, तद्विषये श्रूयमाणाः कथाः च अतिरोचिकाः ।

- उत्तम-सन्तोषयुक्त-जीवनस्य प्राप्त्यर्थम् .....

एषः विभागः आकर्षकाणि व्यावहारिकाणि च जीवनसूत्राणि ज्ञापयति । तेनैव सह समाजे कथं जनप्रियता प्राप्तृत्या, कथं च विपरीतस्थितौ अपि दृढतया स्थातुं शक्यते इत्यादयः विषयाः अपि चर्च्यन्ते ।

- अद्यतनजगत्

समकालिकघटनानां विषये कटाक्षपातः ।

- अनुद्भिन्नानि रहस्यानि

'येति'नामकः जीवी हिममानवः वा किम् अस्ति ? बर्मुडाखाते कथं महानौकाः अदृश्यतां गच्छन्ति ? यानि रहस्यानि जनान् मूर्खान् कुर्वन्ति तेषां वस्तुस्थितिविषये दृष्टिपातः ।

- तत्तन्मासीयाः महापुरुषाः

तत्तन्मासे जन्म प्राप्तवतां महापुरुषाणां व्यक्तित्वस्य सिद्धीनां च परिचयः ।

- भारतस्य अधिगमनम्

भारतस्य परम्परां, संस्कृतिं, साहित्यं च अधिकृत्य रसप्रश्नाः ।

**एतैरेव सह रोचिकाः संस्काराधायिकाः च षडधिकाः कथाः !!**

एतदतिरिच्य भवतां भाषापरिष्कारार्थम् उपायाः,? रसवार्ताः, महापुरुषाणाम् उक्तयः इत्यादयः अपि ! **चन्दमामा - २००० -** भवतां जीवन-सहगामिनी, नवदिगन्तस्य मार्गदर्शिका चापि ।





## THANK YOU THE FOURTH ESTATE!

The news of the reappearance of *Chandamama* was no doubt a delight for the young and that was only expected, but what gave us an added reassurance was the warm coverage of the event by the media. Several major newspapers, in English and other languages, carried the good tide to their readers and the BBC and the Doordarshan Metro (*Aaj Tak* of TV Today) telecast interviews with the publishers highlighting the spirit behind the publication–which is to familiarise the young with the different aspects of the heritage of India through tales, legends, quizzes, and other features, while inspiring them to enter the new millennium with a faith in the future.

We thank the media and wish them a bon voyage into the new era along with *Chandamama*.

Simultaneously, we wish the same to our numerous readers and would-be readers, writers, distributors, agents, and other collaborators and well-wishers who reiterated their support to the publication as soon as the news of its re-launch reached them.

— Publisher

## MORE FOR OUR READERS

We are overwhelmed by the welcome extended by our readers on hearing about the relaunching of their favourite magazine and by their reaction on seeing the first issue for December 1999.



We are extremely grateful for their words of praise, unequivocal support,encouragement, and suggestions.



Among them are puzzles, quizzes, painting contests, and essay-writing competitions which will tap their talents. All these are being planned.



Our subsequent issues will carry details. Our readers may watch out for the announcements. Meanwhile, keep writing to us.

—Editor




# रजनी-रमेशयोः विवाहः

अनाथः रमेशः जन्मना कुब्जः आसीत् । तातकालस्य लघुकुटीरम् एव तस्य सम्पत्तिः आसीत् । तस्मिन् एव वसन् सः शष्कुल्यादीनि खाद्यानि निर्माय मार्गेषु अटित्वा तेषां विक्रयणं कृत्वा जीवनं निर्वहति स्म ।

अथ कदाचित् रमेशस्य प्रतिवेशिनः गृहं विक्रीतम् अभवत् । तत् गृहं रङ्गनाथः नाम नगरवासी क्रीतवान् । रङ्गनाथः वाणिज्ये हानिम् अनुभूय दरिद्रः जातः आसीत् । तस्मिन् ग्रामे तस्य एकर्चतुष्टयपरिमितं क्षेत्रम् आसीत् इति कारणेन तत्र गृहं क्रीत्वा वासम् आरब्धवान् आसीत् सः ।

रमेशः स्वस्य गृहस्य पृष्ठतः उपविश्य खाद्यानि निर्माति स्म । आगमनस्य अनन्तरदिने एव रङ्गनाथः रमेशस्य परिचयं प्राप्तवान् । तस्य पुत्रीद्वयम् आसीत् । तयोः रजनी प्रथमपत्न्याः पुत्री । यदा रजनी द्विवर्षीया आसीत् तदा एव तस्याः माता दिवङ्गता आसीत् । अतः रङ्गनाथः पुनः कनकानामिकाम् अन्यां युवतिम् ऊढवान् आसीत् । तस्यां जातायाः द्वितीयायाः पुत्र्याः नाम मञ्जरी इति ।

रजनी सुन्दरी आसीत् । तस्याः कण्ठः अपि मधुरः आसीत् । गृहस्य पृष्ठभागे उद्याने विविधानि सस्यानि वर्धितवती आसीत् सा । उद्याने गायन्ती सा कार्यं करोति स्म ।

मञ्जरी यद्यपि सुन्दरी न आसीत्, तथापि अलङ्कारविषये तस्याः अधिका आसक्तिः आसीत् । कदापि श्रमेण कार्यं कर्तुं सा न इच्छति स्म ।

रमेशः रजन्याः गीतं शृण्वन् खाद्यानि निर्माति स्म । तस्मात् सः शरीरपरिश्रमं न अनुभवति स्म । कार्यकरणे नीरसता अपि न भवति स्म तस्य । अतः सः तदनन्तरम्

'सुभद्रा'



अधिककालं यावत् खाद्यनिर्माणम् आरब्धवान् । तस्य विक्रयणेन तस्य धनसम्पादनम् अपि अधिकम् अभवत् । सः धनं सङ्गृह्णन् चिन्तितवान् यत् यदा अधिकं धनं सङ्गृहीतं भविष्यति तदा काचित् तरुणी परिणेतव्या इति ।

कदाचित् सम्भाषणसमये रङ्गनाथः रमेशम् उक्तवान् - ''भोः, यथा खाद्य-निर्माणसमये अग्नेः ज्वालाः भवन्तं सन्तापयन्ति तथैव मम द्वे पुत्र्यौ मां बहुधा तापयतः । तयोः विवाहं कर्तुम् अहं शक्नुयाम् उत न इत्येव मम चिन्ता'' इति ।

तस्य वचनस्य श्रवणेन रमेशः चिन्तितवान् यत् यदि रजनीम् अहं परिणयेयं तर्हि उत्तमं भवेत् । तस्याः गानं शृण्वन् अहम् अधिकेन उत्साहेन कार्यं कर्तुं शक्नोमि इति । परम् आत्मनः रूपं स्मरन् सः रङ्गनाथेन सह तद्विषये सम्भाषणं कर्तुं धैर्यं न प्राप्तवान् ।

अथ कदाचित् रङ्गनाथः अकस्मात् हृदयवेदनया पीडितः सन् शय्याम् आश्रितवान् । तां वार्तां ज्ञात्वा रमेशः तं द्रष्टुं तस्य गृहं गतवान् । तदा रङ्गनाथः बहुधा निश्शक्तियुक्तः आसीत् । सः रमेशम् उद्दिश्य - ''भोः, मम ज्येष्ठपुत्र्याः विवाहं वा अहं मम नेत्राभ्यां द्रष्टुं शक्नोमि उत न इति मयि सन्देहः अस्ति । वरदक्षिणां विना मम पुत्रीं वरयितुं कश्चित् अन्धः वा यदि आगच्छेत् तर्हि तस्मै अपि अहं कन्यां दातुं सिद्धः अस्मि । किन्तु तादृशः अपि कोऽपि न उपलभ्यते'' इति उक्त्वा अश्रूणि स्रावितवान् ।

तदा रमेशः - ''यदि भवान् रजनी च इच्छतः तर्हि अहं तां परिणेष्यामि'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा नितरां सन्तुष्टः रङ्गनाथः अनुक्षणं पत्नीं कनकाम् आहूय विषयम् उक्तवान् ।

''इदानीं विवाहस्य विचारः किमर्थम् ? भवान् तूष्णीं नेत्रे निमील्य शयनं करोतु'' इति उक्तवती कनका ।

तथा शयनं कृतवान् रङ्गनाथः पुनः नेत्रोद्घाटनं न कृतवान् एव । रङ्गनाथस्य मरणात् मासद्वयस्य अनन्तरं रमेशः रजन्याः विवाहविषये कनकया सह वार्तालापं कृतवान् ।

'रजन्याः विवाहार्थं धनव्ययः करणीयः । अपि च गृहे कार्याणि कर्तुं जनः

अपि न भविष्यति' इति चिन्तयित्वा कनका रमेशम् एवम् पृष्टवती - ''रमेश ! रजनी प्रतिदिनं सूर्योदयात् पूर्वं स्वर्णमञ्जरीपुष्पैः देवीम् अम्बिकां पूजयति । मध्यरात्रसमये तानि पुष्पाणि विकसन्ति । स्वर्णमञ्जरी-सस्यानि वनमध्ये विद्यमानस्य शिथिलस्य शिवालयस्य समीपे सन्ति । पूर्वं तस्याः पिता तानि पुष्पाणि आनीय यच्छति स्म । इदानीं सः नास्ति खलु ? कुब्जः भवान् तत् कार्यं कर्तुं शक्नोति किम् ?'' इति ।



रजन्याम् अतिशयप्रीतिः आसीत् इति कारणेन रमेशः तत् कार्यम् अङ्गीकृतवान् ।

''तर्हि अद्य रात्रौ भवान् तत्र गत्वा पुष्पाणि आनयतु'' इति उक्तवती कनका ।

'वने विद्यमानाः क्रूराः मृगाः रमेशं खादिष्यन्ति । अतः विवाहः तु दूरे एव भविष्यति' इति चिन्तितवती कनका ।

तस्यां रात्रौ पुष्पम् अन्विष्य गच्छन् रमेशः वने कञ्चित् शिवालयं, तस्य पुरतः स्वर्णमञ्जरीपुष्पाणि च दृष्टवान् । सः पुष्पाणि उत्पाट्य करवस्त्रेण बद्ध्वा ततः प्रस्थाय कानिचन पदानि आगतवान् । तदा देवालयस्य पृष्ठभागे कश्चन रोदनध्वनिः तेन श्रुतः । आश्चर्यचकितः सः देवालयस्य पृष्ठतः गतवान् । तत्र एकस्याः शिलायाः उपरि विकीर्णकेशः कश्चन बालपिशाचः तेन दृष्टः । रमेशस्य दर्शनेन सः इतोऽपि उच्चैः रोदनम् आरब्धवान् ।

'मम दर्शनतः बालपिशाचः भीतः अस्ति' इति ज्ञात्वा प्राप्तधैर्यः रमेशः अभयहस्तं प्रदर्शयन् - ''हे पिशाच ! भयं मास्तु । भवादृशान् बालपिशाचान् अहं न पीडयामि । तथा अहं मम गुरवे वचनं दत्तवान् अस्मि । भवतु, भवतः रोदनस्य कारणं किम् ?'' इति पृष्टवान् ।

तदा पिशाचः अश्रूणि मार्जयन् - ''ज्येष्ठानां वचनम् अश्रृण्वन् अहम् एतत् वनम् आगतवान् । अधुना मार्गभ्रष्टः अस्मि । अस्माकं श्मशानस्य मार्गम् एव न जानामि अहम्'' इति उक्तवान् ।

''तथा वा ? तर्हि भवान् मया सह आगच्छतु । अहं नगरं गच्छन् अस्मि । मार्गे भवन्तं श्मशानं प्रापयिष्यामि'' इति उक्तवान् रमेशः ।

उत्थातुं प्रयत्नं कृत्वा अशक्तः बालपिशाचः - ''भोः, घण्टाद्वयं यावत् अटित्वा श्रान्तः अस्मि । अतः अहम् अधुना उत्थातुम् अपि न शक्नोमि । चलनं तु



दूरापास्तं खलु ?'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा उच्चैः हसन् रमेशः - ''भवतु, इतः परं वने पादरक्षया विना भवान् कदापि मा अटतु'' इति उक्त्वा पुष्पस्य ग्रन्थिं पिशाचस्य हस्ते दत्त्वा तं स्वस्कन्धे आरोप्य ततः प्रस्थितवान् ।

तौ किञ्चित् अग्रे गतवन्तौ । तत्र एकस्य वृक्षस्य अधः द्वौ चोरौ सुवर्णनाणकानि राशीकृत्य विभागं कुर्वन्तौ आस्ताम् । तौ कुब्जस्य स्कन्धे उपविष्टं विकीर्णकेशं बालपिशाचं दृष्ट्वा भीत्या क्रन्दनं कुर्वन्तौ ततः पलायितवन्तौ । रमेशः तानि सुवर्णनाणकानि तत्रैव विद्यमाने चर्मस्यूते पूरयित्वा कक्षेण गृहीत्वा सन्तोषेण ततः प्रस्थितवान् ।

यदा तौ श्मशानं प्राप्तवन्तौ तदा बालपिशाचस्य अदर्शनात् कातराः ज्येष्ठ-पिशाचाः तौ आनन्देन स्वागतीकृतवन्तः । ते अग्रे आगत्य बालपिशाचं रमेशस्य स्कन्धात् अवतारितवन्तः ।

तदा आश्चर्यकारी घटना एका प्रवृत्ता । अकस्मात् रमेशस्य कुब्जता नष्टा अभवत् । तस्य पृष्ठं समीचीनं जातम् आसीत् । ते पिशाचाः तम् उक्तवन्तः - ''भवान् अस्माकं वत्सं सुरक्षिततया आनीतवान् यत् तदर्थम् इदं भवते पारितोषिकम्'' इति ।

पश्चात् रमेशः तेभ्यः कृतज्ञतां समर्प्य स्वगृहं प्रति आगतवान् । 'पिशाचस्य कारणेन मम कुब्जता निवारिता अभवत् इति यदि वदेयं तर्हि कनका भीता भवेत्' इति विचिन्त्य रमेशः ताम् उद्दिश्य - ''वने विद्यमानस्य शिथिलस्य शिवालयस्य महत्त्वं केनापि न ज्ञातम् इति भावयामि अहम् । यतः देवालयस्य प्रवेशस्य समनन्तरम् एव मम कुब्जता गता । एषः धनस्यूतः अपि लब्धः'' इति उक्त्वा तत्रैव स्थितां रजनीम् पश्यन् - ''एतस्याः विवाहस्य प्रस्तावमात्रेण एव एतावत् श्रेयः मया प्राप्तम् । अतः यदि विवाहः भवेत् तर्हि निश्चयेन इतोऽपि प्रगतिं साधयिष्यामि'' इति उक्तवान् । तस्य वचनं श्रुत्वा रजनी लज्जया अन्तः गतवती । सपत्नीपुत्र्याः तादृशम् अदृष्टं दृष्ट्वा कनकायाम् असूयाभावः उत्पन्नः । सा तस्मिन् दिने सायङ्काले रमेशम् आहूय उक्तवती - ''भोः रमेश ! रजनी भवन्तं न इच्छति । कश्चित् राजकुमारः, धनिकः वा स्वस्य पतिः भवेत् इति सा चिन्तयति । मम पुत्री मञ्जरी भवन्तं बहु इच्छति । भवान्

ताम् एव परिणीय सुखेन जीवतु'' इति ।

''तस्मिन् विषये चिन्तयितुं मम कश्चन कालः अपेक्षितः'' इति उक्तवान् रमेशः । 'कनका असत्यं वदन्ती स्यात्' इति तस्य संशयः उत्पन्नः ।

रात्रौ यदा रमेशः निद्राम् अप्राप्नुवन् शय्यायां लुठन् आसीत् तदा द्वारशब्दः श्रुतः तेन । सः द्वारम् उद्घाटितवान् । तदा बालपिशाचः हसन् अन्तः आगच्छन् स्नेहेन तम् उक्तवान् - ''एषः पुष्पस्य बन्धः मम समीपे एव अवशिष्टः । कृपया भवान् स्वीकरोतु'' इति ।

तस्मात् पुष्पाणि स्वीकृत्य तस्मै खाद्यानि दत्त्वा रमेशः - ''एतेषां रुचिः कथम् अस्ति पश्यतु'' इति उक्तवान् ।

''एतेषां नाम किम् ?'' इति पृष्टवान् बालपिशाचः । स्वविवाहविषये एव चिन्तयन् रमेशः तस्य प्रश्नं सम्यक् अशृण्वन् ''रजनी, मञ्जरी चेति'' इति उत्तरं दत्तवान् ।

तावति काले रमेशस्य गृहस्य कोलाहलेन जागरिता कनका बहिः आगत्य - ''अस्मिन् मध्यरात्रसमये कः आगतः भोः ?'' इति रमेशं पृष्टवती ।

तदा रमेशः मन्दं बहिः आगत्य - ''मम मातुलस्य पुत्रः आगतः अस्ति । दिने प्रयाणं तस्मै न रोचते । अतः रात्रौ प्रयाणं कृत्वा आगतः अस्ति सः । तेन सह किञ्चित् वार्तालापं कुर्वन् अस्मि'' इति उक्त्वा पुनः अग्रे सम्भाषणं कर्तुं तस्यै अवकाशम् अदत्त्वा साक्षात् गृहं प्रविष्टवान् ।

तस्य उत्तरे विश्वासम् अप्राप्य कनका मन्दं गत्वा वातायनतः अन्तः दृष्टिं प्रसारितवती । तदा पिशाचः खाद्यानि पश्यन् - ''कृशा रजनी मह्यं मास्तु । स्थूलां मञ्जरीम् एव खादामि'' इति वदन् आसीत् ।

पिशाचस्य दर्शनतः एव भीतायाः कनकायाः हृदयं, तस्य वचनस्य श्रवणेन तु स्तम्भितम् एव अभवत् । सा झटिति गृहं प्रविश्य द्वारं कीलितवती ।

प्रातःकाले यदा रमेशः उत्थाय बहिः आगतः तदा कनका तम् उक्तवती - ''भोः, भवान् रजनीम् एव इच्छति इति मन्ये । अतः ताम् एव भवते दत्त्वा विवाहं करिष्यामि'' इति ।

पश्चात् सप्ताहाभ्यन्तरे रमेशरजन्योः विवाहः वैभवेन सम्पन्नः ।



# व्यवहारकौशलम्

कोशाम्बिनगरस्य निवासिनः भीमस्य एकः एव पुत्रः आसीत् । तस्य नाम गोपालः । यद्यपि सः परिश्रमेण सम्यक् विद्याभ्यासं कृतवान्, तथापि तेन उद्योगः न प्राप्तः । सा एव एका महती चिन्ता आसीत् भीमस्य ।

कदाचित् भीमः पुत्रेण सह गच्छन् आसीत् । तदा मार्गे राज्ञः आस्थानपण्डितः रामशर्मा मिलितवान् । "किं भोः भीम ! कुशलं वा ?" इति पृष्टवान् रामशर्मा ।

"कुशलप्रश्नेन किं प्रयोजनम् ? मम पुत्रस्य पञ्चविंशतिः वर्षाणि अभवन् । सः इतोऽपि उद्योगं न प्राप्तवान् । सा एव चिन्ता मां बाधते । यदा महाराजः भवतः वचनं शृणोति स्म तदा मम पुत्रः लघुः आसीत् । इदानीं किं कर्तुं शक्यते ? सर्वं विधिविलसितम्" इति निराशाध्वनिना उक्तवान् ।

रामशर्मा तूष्णीं तस्य वचनं श्रुत्वा किमपि अनुक्त्वा ततः गतवान् ।

ततः मासाभ्यन्तरे एव गोपालाय राजास्थानतः आह्वानम् आगतम्, उद्योगश्च प्राप्तः । कदाचित् गोपालः पितरम् उद्दिश्य - "तात ! रामशर्मणः प्रभावेण एव अहम् उद्योगं प्राप्तवान् । सः कदापि स्वप्रभावेण अन्येभ्यः उद्योगं न दापयति इति सर्वे वदन्ति । तथापि मम विषये उदारतया व्यवहृतवान् खलु, तत् कथम् ?" इति पृष्टवान् ।

तदा भीमः उक्तवान् - "एतत् एव व्यवहारज्ञानम् इति उच्यते । अहं तस्मिन् दिने रामशर्माणं प्रति 'राज्ञि भवतः प्रभावः न्यूनः जातः अस्ति' इति उक्तवान् । तत् ज्ञात्वा सः स्वस्य प्रभावः राज्ञि अस्ति इति प्रतिपादयितुं भवते उद्योगं दापितवान् अस्ति" इति उक्तवान् ।





# सम्राट् अशोकः
## १५

*(कलिङ्गयुद्धं समाप्तम् । विजयोत्साहेन युक्तः अशोकः - 'मित्रं यशं कलिङ्गप्रदेशस्य राजप्रतिनिधिं करिष्यामि' इति चिन्तितवान् । परन्तु तदा एव कयाचित् युवत्या उत्सृष्टेन बाणेन यशः मृतः । प्राणान् त्यजन् यशः उक्तवान् यत् तस्यै युवत्यै किमपि दण्डनं न दातव्यम् इति । मित्रस्य मरणेन अशोकः विकलचित्तः उद्विग्नः च जातः । आप्तमित्रस्य विषये, कलिङ्गयुद्धे मृतानां निरपराधिनां विषये च नितरां खिन्नः अशोकः गभीरतया चिन्तयन् आसीत् । अनन्तरम्.......)*

तोशालीनगरस्य राजभवनात् युद्धे मृतानां शवाः निष्कासिताः । रक्तेन उत्पन्नानि चिह्नानि सर्वाणि अपि वृष्टिकारणतः निर्गतानि । परन्तु अशोकस्य मनः तु निर्मलं न आसीत् । राजभवने विशालमण्डपे उपविष्टस्य तस्य मनः तु पुनः पुनः विविधैः चिन्तनैः पीडितम् आसीत् । 'येन बाणेन यशः मृतः सः बाणः यदि मयि प्रयुक्तं स्यात् तर्हि किम् अभविष्यत् ?' इति गभीरतया चिन्तयन् आसीत् अशोकः । यद्यपि तस्य शरीरं बाणात् रक्षितं, तथापि तस्य मनः प्राणरहितम् इव कम्पते स्म । स्वजीवने बहुप्रमुखस्थानम् ऊढवतः आपत्कालेषु सर्वदा साहाय्यं कृतवतः यशस्य शाश्वतिकी अनुपस्थितिः अशोकेन सोढुम् अशक्या आसीत् । 'तादृशः आत्मीयस्नेहितः एव नास्ति इदानीम् । एवं स्थिते प्राप्तेन जयेन किं वा प्रयोजनम् ?



जीवने एतस्य जयस्य पात्रं किम् ? जयः इति पदस्य वस्तुतः कः अर्थः ? कदाचित् अदृश्यं गच्छतः जीवस्य अर्थः वा कः ? 'यशः मम प्रतिनिधिरूपेण कलिङ्गराज्यस्य परिपालनं करिष्यति इति अहं स्वप्नं पश्यन् आसम् । परन्तु यावत् मम सैनिकैः एव ज्वालितः अग्निः न उपशान्तः ततः पूर्वम् एव तस्य भूतशरीरं दयानदीतीरे भस्मसात् जातम् अस्ति । अहो विधिविलसितम्' इत्येवं चिन्तयन् उपविष्टवान् आसीत् अशोकः ।

तावता सेनाधिपतिः तत्र आगतः । तदा चिन्ताकूपतः बहिः आगतः अशोकः - ''उज्जयिनीं प्रति दूताः प्रेषिताः किम् ?'' इति पृष्टवान् ।

''प्रेषितवान् अस्मि प्रभो ! भवता कलिङ्गयुद्धे प्राप्तं जयं, युद्धानन्तरं जातस्य यशस्य मरणं च महाराज्ञीं निवेदयितुं दूतान् प्रेषितवान् अस्मि'' इति उक्तवान् सेनाधिपतिः ।

''अस्माभिः प्राप्तः जयः तस्याः सन्तोषाय न भविष्यति । तावदेव न, यशस्य मरणवार्ता तस्यां निश्चयेन दिग्भ्रान्तिं जनयिष्यति । सः सहोदरः सर्वदा तस्याः रक्षकः अपि आसीत्'' इति खेदेन उक्तवान् अशोकः ।

तावता बहिर्भागतः - ''कलिङ्गराज्यस्य उपरि निष्कारणं भवान् आक्रमणं कृतवान् । अत्रत्याः स्त्रीपुरुषाः एतत् सोढुं न शक्तवन्तः । अतः ते शौर्येण युद्धं कृत्वा सहोदरैः, पुत्रैः, रक्षकैः, पतिभिः च विहीनाः जाताः । तेषां विषये किञ्चित् वा चिन्तयतु तावत्'' इति कस्याश्चित् महिलायाः ध्वनिः श्रुतः ।

सेनाधिपतिः पृष्ठतः पश्यन् - ''अये, असम्बद्धप्रलापिनि ! अविवेकिनि ! उन्मत्ते ! मुखं पिदधातु तावत्'' इति कठोरस्वरेण उक्तवान् ।

यशं मारितवती सा युवतिः निगडसहिता एव अशोकस्य पुरतः उपस्थापिता आसीत् सैनिकैः ।

''भवता एतस्याः महिलायाः कृते कीदृशदण्डनं दीयते इति ज्ञातुम् एतां पुरतः आनीतवान् अस्मि'' इति उक्तवान् सेनाधिपतिः ।

अशोकः आश्चर्येण पुरतः विद्यमानां दृढमनस्कां तां युवतिं तदेकदृष्ट्या अवलोकितवान् ।

''मम मुखस्य पिधानं मया न क्रियते चेत् अपि भवद्भिः कार्यते एव । भवताम् इच्छानुसारमेव भवतु । परन्तु तस्मात् पूर्वं मम वचनानि किञ्चित् अवधानपूर्वकं श्रुत्वा वदतु । उन्मत्ता इति मां निर्दिष्टवान् खलु भवान्। वस्तुतः उन्मत्तता कस्य ? अधिकारमदेन सहस्रगृहाणां नाशं कृत्वा लक्षाधिकनिरपराधिनः मारितवतां भवताम्, उत प्रजानां विषये भवद्भिः कृतस्य अन्याय्यस्य प्रतीकारं दर्शयताम् अस्माकम् ? केषाम् उन्मत्तता इति चिन्तयतु तावत् । अहम् एकस्य सामन्तराजस्य पुत्री । भवद्भिः कृतेन दौर्जन्येन मम पिता, आवुत्तः, सहोदराः च मृताः । एतत् सोढुम् अशक्ता मम अग्रजा माता च प्राणान् त्यक्तवत्यौ । एतत् मम कुटुम्बमात्रस्य दुःखम् । शान्तियुक्ते राज्ये कीदृशप्रमाणेन हानिः कृता अस्ति इति चिन्तितं किम् ? दृढकायाः युवकाः सर्वे मृताः । ये जीवन्ति ते कारागारे सन्ति । एतेन तत् वाणिज्यं सर्वथा स्थगितम् अस्ति, यच्च परम्परागत-क्रमेण प्रचलत् आसीत् । क्षेत्रेषु महता प्रमाणेन विद्यमाना व्रीहिसमृद्धिः निश्चयेन शुष्कीभविष्यति । तदा राज्ये 'क्षामः उत्पत्स्यते । युद्धकारणतः ये वृद्धाः, बालाः, महिलाः च न मृताः, ते सर्वे बुभुक्षा-कारणतः मरणं प्राप्स्यन्ति । एतस्य सर्वस्य कारणं किं महाराज ? भवतः राज्यापेक्षा । जयशालिनं भवन्तं दृष्ट्वा भवतः जनाः जयकारं कुर्युः । अवशिष्टाः भवन्तं दृष्ट्वा भयेन कम्पनम् अनुभवेयुः । एतादृश्या दुराशया कृतं युद्धम् एव एतादृशस्य



अनर्थस्य मूलं कारणम्'' इति उद्वेगमिश्रित-स्वरेण निरन्तरं वदन्ती आसीत् सा युवतिः ।

''स्थगयतु तावत्'' इति उच्चैः गर्जन् कट्यां विद्यमानस्य खड्गस्य उपरि हस्तं प्रसारितवान् सेनाधिपतिः ।

''अलं साहसेन । कथनार्थं तस्यै अवकाशः दीयताम्'' इति उक्तवान् अशोकः ।

सेनाधिपतिः आश्चर्यम् अनुभवन् तूष्णीं स्थितवान् ।

सा युवतिः पुनः अपि - ''भवतः सैनिकानां हस्तात् मरणं प्राप्तवन्तः अस्माकं जनाः यत्र गतवन्तः तत्र भवता अपि एकदा गन्तव्यम् एव खलु ? परलोकस्य विषये अहम् अधिकं न जानामि । अस्मदीयाः सर्वे भवतः निरीक्षायाम् एव सन्ति इति अहं



भावयामि । ते सर्वे युगपत् भवतः उपरि यदि आक्रमणं करिष्यन्ति तर्हि भवान् किं कर्तुं शक्ष्यति ? अत्रत्यं सेनाधिपतिम् अङ्गरक्षकान् च भवान् पृष्ठतः नेतुं न शक्नोति खलु ? आयुधानि सज्जीकुर्वतः मम सहोदरान् पितरं च भवतः सैनिकाः मध्येमार्गं मारितवन्तः । परलोके ते एव प्रथमं भवतः स्वागतं कुर्युः इति मम चिन्तनम्'' इति उक्त्वा उच्चैः हसितुम् आरब्धवती ।

''प्रभो ! एतस्याः अर्थहीनवचनानि समापयितुम् अनुमतिं ददातु कृपया'' इति वदन्, खड्गं स्पृशन् पुरतः आगतवान् सेनाधिपतिः ।

अशोकः अनङ्गीकारपूर्वकं शिरः चालयन् गाम्भीर्येण तस्याः समीपम् आगत्य - ''भद्रे, भवत्याः नाम किम् ?'' इति पृष्टवान् ।

''चारुलता इति'' इति उक्तवती सा युवतिः ।

''चारुलते ! भवत्याः वचनात् अहं कुपितः नास्मि । यदि भवती एव मम स्थाने स्यात् तर्हि किम् अकरिष्यत् ?'' इति पृष्टवान् अशोकः ।

''अप्रयोजिकां कीर्त्याशां निष्करुणापूर्णं रक्तदाहं च अस्मिन् एव क्षणे अत्यक्ष्यम् । कृतानां दुष्कर्मणां विषये पश्चात्तापम् अनुभवेयम् । आयुधानि परित्यज्य - 'हिंसा मानवस्य परमहीनगुणः' इति उद्घोषणम् अकरिष्यम्'' इति दृढस्वरेण उच्चैः उक्तवती चारुलता ।

तदा अशोकस्य प्रधानाङ्गरक्षकः तत्र समागत्य - ''प्रभो ! उज्जयिनीतः दूतः आगतः'' इति उक्तवान् ।

''तम् अन्तः आनयतु'' इति उक्तवान् अशोकः ।

बहिः गतः अङ्गरक्षकः अनुक्षणं दूतेन सह पुनः प्रविष्टवान् ।

''श्रीकर ! उचिते समये एव आगतः अस्ति भवान् । उज्जयिन्यां महाराज्ञी, पुत्राः, अन्ये सर्वे च कुशलिनः किम् ?'' इति दूतं पृष्टवान् अशोकः ।

''क्षम्यतां महाप्रभो ! एतादृश्या दुःखपूर्णवार्तया सह आगत्य भवान् द्रष्टव्यः भवेत् इति कदापि मया चिन्तितं न आसीत्'' इति शिरः अवनमय्य उक्तवान् श्रीकरः ।

''विनाचिन्तां वदतु'' इति शिरः



चालयन् सूचितवान् अशोकः ।

''महाराज्ञी विदिशादेवी इहलोकतः मुक्ता अस्ति महाप्रभो'' इति गद्गदस्वरेण उक्तवान् श्रीकरः ।

''हा हन्त ! भवान् किं वदन् अस्ति ?'' इति दिग्भ्रान्तः सन् उच्चस्वरेण पृष्टवान् अशोकः ।

''प्रभो ! वाणिज्यार्थम् उज्जयिनीतः अत्र आगताः केचन वणिजः प्रथमदिनस्य भीकरयुद्धं दृष्ट्वा भयेन उज्जयिनीं प्रति गतवन्तः । ते अत्रत्यानां भयङ्करघटनानां विषये, जनानां यातनादिविषये च तत्रत्य-जनान् उक्तवन्तः । सः विचारः महाराज्ञ्या अपि ज्ञातः । सा तान् वणिजः आहूय वस्तुस्थितिं ज्ञातुम् इष्टवती । ते यथावत् सर्वम् उक्तवन्तः । एतत् सर्वं श्रुत्वा - 'पत्या कृतानां दुष्कर्मणां निमित्तम् अहं प्रायोपवेशं करिष्यामि' इति उक्त्वा देवालयं प्रविश्य तत्र निश्चलध्याने मग्ना सती सा उपविष्टवती । दिनत्रयं यावत् निद्राहारं विना सा तथैव उपविष्टवती आसीत् । चतुर्थदिने प्रज्ञाहीना सती पतिता सा तत्रैव प्राणान् त्यक्तवती'' इति उक्तवान् ।

तदा तत्र किञ्चित्कालं यावत् मौनं प्रसृतम् आसीत् । तदा चारुलता उच्चैः हसितुम् आरब्धवती । राजभवने तस्याः हासस्य प्रतिध्वनिः श्रुतः ।

''अये, अविवेकिनि ! एषः हासस्य कालः किम् ? भवत्या लज्जा न अनुभूयते किम् ?'' इति तर्जनस्वरेण पृष्टवान् सेनाधिपतिः ।

''सेनाधिपतिवर्य ! मम जीवने वस्तुतः हासदुःखयोः भेदः बहोः कालात् पूर्वम् एव नष्टः जातः । वस्तुतः तयोः अर्थः एव नास्ति मम जीवने । अहं यदाकदापि हसितुं शक्नोमि, रोदितुम् अपि शक्नोमि'' इति वदन्ती पुनः उच्चैः हासम् आरब्धवती चारुलता ।

''प्रभो ! एतां दुष्टां नीत्वा कारागृहे स्थापयिष्यामि'' इति उक्तवान् सेनाधिपतिः ।

''मास्तु । तस्याः निगडम् अपनीय तां बन्धमुक्तां करोतु'' इति आज्ञापितवान् अशोकः ।

''यशं मारितवती एषा बन्धमुक्ता करणीया वा प्रभो ?'' इति आश्चर्येण पृष्टवान् सेनाधिपतिः ।

''सत्यम् । यशेन एव एषा क्षान्ता

अस्ति । सा बाणं मम उपरि न प्रयुक्तवती इति कारणात् कृतज्ञतां सूचयितुं सः एतत् कार्यं कर्तुम् उक्तवान् अस्ति । आत्मीयस्य यशस्य अन्तिमा अपेक्षा सम्पन्ना भवेत् एव'' इति गम्भीरस्वरेण उक्तवान् अशोकः ।

सेनाधिपतिः यदा निगडम् अपनीतवान् तदा चारुलता - ''प्रभो ! यशः उत्तमः इत्यत्र तस्य अन्तिमवचनानि एव प्रमाणम् । मम कुटुम्बजनान्, बन्धुमित्राणि, निरपराधि-जनान् च मारितवतः भवन्तं यशं वा लक्ष्यीकृत्य बाणः प्रयोक्तव्यः इति निर्णीय अहं धनुः उन्नीतवती । परन्तु भवान् त्यक्तव्यः इति भावना अन्तिमक्षणे मम मनसि कथमपि सञ्जाता । प्रायशः भवता प्रपञ्चस्य हितार्थम् उत्तमकार्यं किमपि करणीयम् इति विधिनिर्णयः स्यात्'' इति उक्तवती ।

''अतिदुष्टः इति मत्वा सर्वे जनाः मां द्विषन्ति । एतादृशः अहं प्रपञ्चजनानाम् उपकारकः भविष्यामि किम् ?'' इति चिन्तामिश्रितस्वरेण चारुलतां पृष्टवान् अशोकः ।

''राजन् ! सर्वेषु अपि गुणाः दोषाः चापि भवन्ति एव ! यशः अनेकजनानां घोरमरणस्य कारणीभूतः आसीत् । तथापि सः अन्तिमकाले उत्तमस्वभावस्य प्रकटनं कृतवान् । तथैव जनैः दुष्टः इति निर्दिश्यमानः भवान् शान्तमूर्तिः सन् जनानां प्रेमाभिमानापात्रं भवेत् । सावधानं चिन्तयतु'' इति उक्त्वा तं नमस्कृत्य ततः निर्गतवती चारुलता ।



युद्धकाले बन्धितान् सर्वान् विमुक्तान् कृत्वा तोशालीनगरे सेनाधिपतिं संस्थाप्य अशोकः शोकतप्तः सन् एव उज्जयिनीं गतवान् । तत्र विदिशादेवीं भस्मीकृतवतीं चितां दृष्ट्वा अश्रुतर्पणं समर्पितवान् । पुत्रः महेन्द्रः, पुत्री सङ्घमित्रा च तम् उभयतः स्थितवन्तौ ।

अशोकः अत्यन्तं वेदनया - ''भवतोः मातुः विषये महान् विश्वासद्रोहः आचरितः मया'' इति उक्तवान् ।

''भवान् तदर्थं योग्यपश्चात्तापम् अनुभवितुं शक्नोति । सर्वेषाम् अपि दोषाणां परिहारः कश्चन भवति । तथागतस्य बुद्धदेवस्य करुणा सर्वदा भवति अस्ति एव'' इति वदन् गुरुदेवः उपगुप्तः तत्र आगतवान् ।

तस्मात् क्षणात् अशोकस्य जीवने नूतनस्य अध्यायस्य आरम्भः जातः । गुरुदेवस्य ज्ञानबोधनात् नितराम् आकृष्टः अशोकः बौद्धमतम् अवलम्बितवान् । युद्धविषये तस्मिन् आसक्तिः लुप्ता जाता । 'अहिंसा परमो धर्मः' इति वदन् सः राज्यं हिंसाविहीनं कृतवान् । राज्ये सर्वत्र शान्तेः अहिंसायाः च वर्धनार्थं तत्र तत्र धर्मरक्षकान् अपि नियुक्तवान् सः ।

राज्यपिपासाकारणतः नष्टस्य तोशाली-दुर्गस्य पुरतः धौलीशिखरस्य उपरि स्वपश्चात्तापद्योतकं शिलाफलकं लेखितवान् सः । 'केवलेन पशुबलेन खड्गसाहाय्येन वा कम् अपि जयं प्राप्तुं न शक्नुमः । उत्तमानां कार्याणां द्वारा जनानां सन्तोषः साधितः चेत् ततः शाश्वतराज्यं निश्चयेन सम्पादयितुं शक्यते' इति एतं सत्यविचारं शिलाफलके लेखितवान् ।

एतादृशान् सन्देशान् राज्ये सर्वत्र शिलाफलकेषु लेखितवान् अशोकः । प्रजाः सर्वाः सन्मार्गगामिन्यः यथा स्युः तथा कर्तुं विशेषप्रयत्नं कृतवान् सः । प्रतिवेशि-राज्यानि प्रति अपि शान्तिदूतान् सः प्रेषितवान् । तावदेव न, सिरिया, इजिप्त् इत्यादीन् बहून् देशान् प्रति अपि पण्डितान् शान्तिदूतान् बौद्धमतप्रचारकान् प्रेषितवान् सः ।

तस्य पुत्रः महेन्द्रः, पुत्री सङ्घमित्रा च श्रीलङ्कां गत्वा तत्रत्यं राजानम् अन्यजनान् च बौद्धमतावलम्बिनः कृतवन्तौ । बौद्धधर्मस्य तत्त्वतः आकृष्टाः बहवः श्रीलङ्कादेशीयाः स्वेच्छया बौद्धधर्मानुयायिनः जाताः । अशोकः महान् सम्राट् सन् विश्वप्रसिद्धः जातः । सः युद्धे जित्वा चक्रवर्ती जातः इत्येतत् एतस्य कारणं न । मानवसमूहविषये तेन दर्शिता अपारा करुणा दृढविश्वासः एव एतस्य कारणम् । प्रपञ्चे अनेके राजानः साम्राज्यसंस्थापकाः जाताः । तथापि तेषां नाम कुत्रापि न श्रूयते । परन्तु 'सर्वे ज्ञानार्जनं कुर्युः । सर्वे अपि विवेकिनः भवेयुः' इति इच्छन् महतः लक्ष्यस्य साधनार्थं स्वजीवनं राज्यसम्पदं च उपयुज्य जनादरं प्राप्तवतः राज्ञः अशोकस्य नाम चिरस्थायि जातम् अस्ति । वस्तुतः श्रेष्ठः 'सम्राट्' अशोकः एकः एव ।

– *(समाप्तम्)*






# माधवस्य कृतघ्नता

दृढनिश्चयः त्रिविक्रमः पुनः अपि वृक्षस्य समीपम् आगतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोपितवान् । ततः अधः आगत्य पुनः अपि यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! प्रपञ्चे चिन्तित-कार्याणि सर्वाणि साधयितुं साहसप्रवृत्तिः दृढचित्ततामात्रं वा अपर्याप्तम् । तादृश-गुणवन्तः लोके बहवः सन्ति एव । ताभ्यां द्वाभ्यां गुणाभ्यां सह लक्ष्यविषये स्पष्टज्ञानम् अपि आवश्यकम् । ते च गुणाः गुरूणां द्वारा प्राप्तुं शक्याः । परन्तु तादृशं साहाय्यं कृतवद्भिः गुरुभिः छात्रेभ्यः प्रतिफलनिरीक्षा या क्रियते सा तु सहजा एव । अत्यन्तं भयङ्करे एतस्मिन् श्मशाने, अर्धरात्रे भवान् निर्भीतः सन् अटन् अस्ति यत् तत् पश्यामः चेत् ज्ञायते यत् भवता तादृशी अर्हता

## वेतालकथा



कस्माच्चित् गुरुतः प्राप्ता अस्ति इति । परन्तु बहुधा वयं पश्यामः यत् कार्यसाधनानन्तरं छात्राः कृतघ्नाः भवन्ति इति । तस्य उदाहरणरूपेण माधवस्य कथां श्रावयामि । मार्गायासस्य परिहारार्थं तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

माधवः कस्यचित् दरिद्रकृषिकस्य पुत्रः । चिरकालस्य प्रतीक्षायाः अनन्तरं सः जातः आसीत् इति कारणतः सः मातापित्रोः अत्यन्तं प्रीतिपात्रतां प्राप्य वर्धमानः आसीत् । तस्मिन् विद्याभ्यासस्य विषये आसक्तिः न आसीत् । परन्तु विद्वद्भिः पण्डितैः च यत् चमत्कारपूर्णं सम्भाषणं क्रियते तत् तेन अपि अभ्यस्तम् आसीत् । एवम् एव तस्य दश वर्षाणि अतीतानि ।

एकदा माधवः अन्यबालकैः सह कन्दुकेन क्रीडन् आसीत् । तस्मिन् समये रामशास्त्री नाम कश्चन विद्वान् तेन मार्गेण आगतः । कन्दुकः तस्य वस्त्रस्य उपरि पतितः इति कारणतः तस्य श्वेतवस्त्रस्य उपरि कृष्णवर्णस्य चिह्नं जातम् ।

तदा रामशास्त्री कोपेन - ''कः सः ?'' इति उच्चैः पृष्टवान् ।

माधवं विहाय अन्यबालाः सर्वे धावितवन्तः । रामशास्त्री माधवस्य हस्तं गृह्णन् - ''भवान् न केवलं चेष्टालुः, अपि तु निर्भीकः अपि'' इति कोपेन तं पश्यन् उक्तवान् ।

तत् श्रुत्वा माधवः सधैर्यम् उक्तवान् - ''सूर्यः यदि अस्ति तर्हि भयम् अनुभोक्तव्यम् । परन्तु शीतलां कौमुदीं ददतं चन्द्रं दृष्ट्वा किमर्थं भीतः भवेयम् ?'' इति ।

रामशास्त्री अनुक्षणं तस्य हस्तं त्यक्त्वा - ''अहं सूर्यः एव । मां चन्द्रं किमर्थं भावितवान् भवान् ?'' इति पृष्टवान् ।

''स्वामिन्, नेत्रम् उद्घाट्य सूर्यं द्रष्टुं न शक्यते । अतः तस्मिन् चिह्नानि भवन्ति चेत् अपि ज्ञातुं न शक्यते । परन्तु चन्द्रे विद्यमानानि चिह्नानि सर्वाणि स्फुटतया दृष्टिगोचराणि भवन्ति । भवति तादृशानि चिह्नानि स्फुटतया दृश्यन्ते । अतः भवान् चन्द्रः एव'' इति उक्तवान् माधवः ।

तस्य चमत्कारकवचनानि श्रुत्वा मनसि एव हसन् रामशास्त्री पृष्टवान् - ''एतत् चिह्नं सहजं न । एतत् भवतः कारणतः जातम् । एषः भवतः दोषः एव खलु ? एतद्विषये किं वदति भवान् ?'' इति ।

"स्वामिन् ! भवान् यथा चन्द्रः भवेत् तथा मया कृतम् अस्ति । अतः भवान् इतः परं सर्वदा शीतलां कौमुदीं प्रसारयन् एव भवेत् । मया इतोऽपि किं वक्तव्यम् इति भवान् एव वदतु" इति उक्तवान् माधवः ।

"मां भवान् एव चन्द्रं कृतवान् अस्ति । अतः मम कौमुदी अपि भवता एव अनुभोक्तव्या । तदर्थं प्रतिदिनं सायङ्काले भवान् मम गृहम् आगच्छतु । भवतः उपरि ज्ञानकौमुदीं स्नावयिष्यामि" इति हसन् उक्तवान् रामशास्त्री ।

अनन्तरं सः माधवस्य पित्रा मिलित्वा – "भवतः पुत्रः महाबुद्धिमान् अस्ति । अहं तं पाठयिष्यामि । तेन तस्य जीवने प्रवृद्धिः भविष्यति" इति उक्तवान् ।



एवं माधवः रामशास्त्रिणः शिष्यः जातः । अनन्तरं तस्मिन् विद्याभ्यासविषये आसक्तिः उत्पन्ना । सकलशास्त्राणाम् अपि अभ्यासम् आरब्धवान् सः ।

माधवः सप्तदशवर्षीयः जातः । एकदा सः पितुः निमित्तं क्षेत्रं प्रति भोजनं नयन् आसीत् । तदा मध्येमार्गं सः मनुष्ययोः सङ्ग्रामं दृष्टवान् । एकस्य हस्ते लवित्रम् आसीत् । यस्य हस्ते लवित्रं न आसीत् सः ग्रामस्य महाधनिकः धनगुप्तः आसीत् ।

माधवः पाथेयं पार्श्वे संस्थाप्य लवित्रं यस्य हस्ते आसीत् तेन अत्यन्तं चातुर्येण युद्धं कृत्वा तदीयं लवित्रम् आकृष्य स्वीकृतवान् । अनन्तरं माधवः धनगुप्तः च तं बद्धवन्तौ ।

"अद्य मम प्राणान् भवान् रक्षितवान् अस्ति । भवान् यत् इच्छति तत् पृच्छतु । दास्यामि" इति उक्तवान् धनगुप्तः ।

"यदा आवश्यकता भविष्यति तदा निश्चयेन स्वीकरिष्यामि । परन्तु अस्माकं ग्रामः एतादृशैः चोरैः पीडितः न भवेत् । दिवा एव एषः भवतः उपरि आक्रमणं कृतवान् अस्ति । इतःपरं एतादृशघटनाः यथा न भवेयुः तथा सुदृढं रक्षणं स्यात् अस्माकं ग्रामे । ज्येष्ठाः यदि मनः कुर्वन्ति तर्हि एतत् कष्टसाध्यं तु न" इति उक्त्वा क्षेत्रं प्रति प्रस्थितवान् माधवः ।

तस्मिन् दिने सायङ्काले माधवं ग्रामाधिकारी आहूय – "अद्य भवता गृहीतः दुष्टः सामान्यः न । सः परितः स्थितेषु ग्रामेषु अत्यन्तं कुप्रसिद्धः दुष्टः भुजङ्गः । तस्य स्मरणमात्रेण एव सर्वे जनाः कम्पन्ते । तादृशम् एव भवान् गृहीतवान्



F-4 SANSKRIT



अस्ति । ततः सिद्धं यत् भवति काचित् विशेषशक्तिः अस्ति इति । भवता युद्धविद्या कस्मात् प्राप्ता ?'' इति पृष्टवान् ।

''रामशास्त्रिणः सकाशात् मया शास्त्र-विद्या गृहीता । परन्तु युद्धविद्याविषये अहम् अज्ञानी एव'' इति उक्तवान् माधवः ।

''परन्तु भवता यानि कौशलानि सम्पादितानि तानि भुजङ्गेन अपि न ज्ञातानि इति श्रूयते । एतम् अंशं भुजङ्गः एव माम् उक्तवान् अस्ति । अतः भवन्तम् अद्य एव ग्रामसंरक्षकस्थाने नियोजयामि'' इति उक्तवान् ग्रामाधिकारी ।

तदा माधवः तं नमस्कुर्वन् – ''मया भुजङ्गः पराजितः इति तु सत्यम् । परन्तु तत् काकतालीयम् । युद्धविद्यायाः शिक्षणं मम नास्ति इत्यतः मया एतत् दायित्वं न अङ्गीक्रियते'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा ग्रामाधिकारी हसन् – ''भवान् युद्धविद्यायां निपुणः इदानीं नास्ति चेत् अग्रे भविष्यति । ग्रामाधिकारिणः मम अनेकानि दायित्वानि सन्ति । सर्वाणि मया इदानीं कष्टेन निरुह्यमाणानि सन्ति । इदानीं भवन्तं ग्रामसंरक्षकरूपेण नियोजयामि । भवान् प्रतिदिनं ब्राह्मीमुहूर्ते एव अत्र आगत्य मत्तः युद्धविद्यां जानातु'' इति उक्तवान् ।

तदारभ्य माधवः ग्रामाधिकारिणः शिष्यः जातः । तस्य युद्धविद्यायाम् अपि महती आसक्तिः सञ्जाता । युद्धविद्यायां परिणतिं प्राप्तवान् माधवः ग्रामं परितः कण्टकमयीं वृतिं कारितवान् । ग्रामस्य प्रवेशार्थम् एकत्र द्वारं कल्पितम् । माधवः उभाभ्यां सह तत्र रक्षणकार्यम् आरब्धवान् ।

माधवः यदा ग्रामसंरक्षकः अभवत् तदारभ्य प्रवेशद्वारस्य समीपम् आगत्य तं पाठयति स्म रामशास्त्री ।

गच्छता कालेन माधवः विंशतिवर्षीयः जातः । तावता सः शस्त्रविद्यायां शास्त्र-विद्यायां च निपुणः जातः आसीत् । सः द्वाभ्यां गुरुभ्याम् अपि गुरुदक्षिणां दातुम् इष्टवान् ।

''यदा भवान् स्वशक्तिसामर्थ्यात् सम्यक् धनसम्पादनं करिष्यति तदा यथेष्टं दातुं शक्नोति । तावत्पर्यन्तं गुरुदक्षिणादानं मास्तु'' इति उक्तवन्तौ रामशास्त्री ग्रामाधिकारी च ।

एकदा राजधानीतः माधवस्य बन्धुः आगतवान् । सः माधवस्य शक्ति-सामर्थ्याधिकं ज्ञात्वा उक्तवान् –

''राजधान्याम् अग्रिममासे काचित् विचित्रा स्पर्धा भविष्यति । तदा शस्त्रशास्त्रादि-विषयेषु स्पर्धाः प्रचलिष्यन्ति । क्षेत्रद्वयस्य अपि पृथक् पारितोषिकं घोषितम् अस्ति । शस्त्रविद्यायां यः विजयी भविष्यति सः शास्त्रविद्याविजेत्रा सह स्पर्धां कुर्यात् इति तु स्पर्धानियमः । तत्र यः विजयं प्राप्स्यति तस्मै अपूर्वम् अन्यत् उपायनं दास्यते । एतस्मिन् विषये सर्वे परस्परं वदन्तः सन्ति । एतावत्पर्यन्तं शस्त्रशास्त्रनिपुणयोः मध्ये कदापि स्पर्धा न जाता । एतयोः स्पर्धयोः भागं वोढुं दशसहस्रं रजतनाणकानि प्रवेश-शुल्करूपेण दातव्यानि'' इति उक्तवान् ।



माधवे एतस्याः स्पर्धायाः विषये आसक्तिः उत्पन्ना । परन्तु प्रवेशशुल्कस्य विषयं श्रुत्वा सः निरुत्साही जातः ।

स्पर्धाविषयं धनगुप्तः अपि ज्ञातवान् । सः माधवेन मिलन् - ''अहं दशसहस्रं रजतनाणकानि दास्यामि । भवान् राजधानीं गत्वा स्पर्धायां भागं वहतु । जयः प्राप्तः चेत् अनन्तरकाले अहं यत् इच्छामि तत् दातव्यं भवता'' इति उक्तवान् ।

''अहं यदि दातुं शक्नोमि तर्हि निश्चयेन दास्यामि'' इति उक्तवान् माधवः ।

धनगुप्तः अङ्गीकारं सूचितवान् । ततः माधवः राजधानीं गतवान् । शास्त्रविद्या-स्पर्धायां प्रथमस्थानं प्राप्तवान् सः पारितोषिकरूपेण लक्षं सुवर्णनाणकानि प्राप्तवान् । शस्त्रविद्यास्पर्धायाम् अपि प्रथमस्थानं प्राप्य तावत् एव धनं प्राप्तवान् सः । एतेन कारणेन अग्रे स्पर्धा एव न अभवत् । यतः शस्त्रशास्त्रस्पर्धयोः विजयी एषः एव आसीत् ।

तदा देशस्य राजा उक्तवान् - ''एतस्याः विचित्रस्पर्धायाः अन्त्यम् एवं जातम् इति तु सन्तोषस्य विषयः । एतादृशस्य स्पर्धा-संयोजनस्य एकं मुख्यकारणम् अस्ति । मम एकमात्रपुत्र्याः सुनन्दायाः कृते अहं वरान्वेषणं कुर्वन् अस्मि । स्वयंवरार्थम् अन्यदेशीयराजकुमारान् आह्वातुम् अहं न इच्छामि । देशे विद्यमानेषु कश्चित् उत्तमतरुणं चित्वा उत्तमसम्प्रदायः आरम्भणीयः इति अस्ति मम इच्छा । स्वसामर्थ्यविषये येषां पूर्णविश्वासः अस्ति ते केवलं भागं स्वीकुर्युः इति कारणतः प्रवेशशुल्कम् अधिकं स्थापितम् आसीत् । इदानीं माधवसुनन्दयोः विवाहं यदि करिष्यामि तर्हि तत् सर्वेषां सम्मतं स्यात्



इति अहं चिन्तयामि'' इति । सभायां स्थिताः सर्वे आनन्देन करताडनं कृतवन्तः ।

राजकुमारी-माधवयोः विवाहस्य मुहूर्तः निश्चितः । कार्यक्रमस्य निमन्त्रणं माधवस्य मातापितृभ्यां, गुरोः धनगुप्तस्य च कृते प्रेषितम् । सर्वे विवाहस्य पूर्वदिने एव राजधानीम् आगतवन्तः ।

माधवः रामशास्त्रिणे ग्रामाधिकारिणे च स्पर्धातः सम्पादितं धनं गुरुदक्षिणारूपेण ददत् एवम् उक्तवान् - ''भवतां करुणया एव अहम् एतादृशीम् उन्नतिं प्राप्तवान् अस्मि'' इति ।

रामशास्त्री माधवेन दीयमानं धनम् अस्वीकुर्वन् - ''अग्रे भवान् महाराजः भविष्यति । तदा माम् आस्थानपण्डितस्य स्थाने नियोजयतु । सा एव मह्यं दातव्या गुरुदक्षिणा'' इति उक्तवान् ।

एतत् श्रुत्वा माधवः आश्चर्येण - ''गुरुवर्य, आस्थानपण्डितस्य चयनार्थं केचन नियमाः सन्ति । पद्धतयः वर्तन्ते । तदनुसारं भवता यदि तत् स्थानं प्राप्यते तर्हि तत् सुष्ठु एव । तदर्थम् अहम् अपि प्रयत्नं करिष्यामि । परन्तु तस्य, गुरुदक्षिणायाः च सम्बन्धं न कल्पयतु । इदानीं मया दीयमानं लक्षं सुवर्णनाणकानि स्वीकरोतु'' इति प्रार्थितवान् ।

तदा रामशास्त्री कोपेन - ''मूर्ख ! मार्गे अटन्तं भवन्तम् आहूय अग्रे आनीतवान् अस्मि अहम् । मम कारणतः एव भवान् एताम् उन्नतिं प्राप्तवान् अस्ति । एतादृशः भवान् मम एव परीक्षां कर्तुं सिद्धः अस्ति । धिक् भवन्तम् ! भवान् महाकृतघ्नः'' इति उक्त्वा ततः निर्गतवान् ।

ग्रामाधिकारी गुरुदक्षिणारूपेण सेनाधिपतिस्थानम् इष्टवान् । रामशास्त्रिणे यादृशम् उत्तरं दत्तं तादृशम् एव उत्तरं तस्मै अपि दत्तवान् माधवः । ग्रामाधिकारी अपि तं कृतघ्नः इति निन्दित्वा गतवान् ।

अनन्तरं धनगुप्तः माधवम् उक्तवान् - ''मम पुत्रीं परिणयतु'' इति । माधवः विनयेन तत् निराकृतवान् । सः अपि माधवं 'कृतघ्नः' इति तर्जयित्वा गतवान् ।

वेतालः एवं कथां समाप्य उक्तवान् - ''राजन् ! माधवः राजा भविष्यामि इति अहङ्कारेण गुर्वोः वचनं निराकृतवान् । एषा कृतघ्नता खलु ? अपि च स्पर्धायां भागं ग्रहीतुम् अवकाशं दत्तवतः धनगुप्तस्य अपेक्षाम् अपि सः निराकृतवान् । 'भवतः

पुत्रीं न वृणोमि' इति उक्तवान् सः । एषा अपि कृतघ्नता खलु ? एतेषां सन्देहानाम् उत्तरं जानन् अपि भवान् न वदति चेत् भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः- ''देशस्य अधिपतिः महाराजः एव स्वपुत्रीं स्वस्य इच्छायाः अनुसारम् कस्मैचित् अयच्छन् स्पर्धां संयोज्य समर्थं चितवान् । तस्यां स्पर्धायां जयः प्राप्तः इति कारणतः एव माधवः राजकुमारीं परिणेतुं, देशस्य राजा भवितुं च अवकाशं प्राप्तवान् । तस्य तात्पर्यम् एवम् अस्ति यत् राज्यव्यवहार-सम्बन्धिन्यः पदव्यः इष्टजनाय न दातव्याः, प्रत्युत समर्थेभ्यः दातव्याः, नियमाः च पालनीयाः इति । एतम् एव अंशं सः गुरुम् उक्तवान् । रामशास्त्रिप्रभृतीनां तु स्व-सामर्थ्यविषये एव विश्वासः नास्ति । तेषां कारणतः एव माधवः वर्धितः इति तु सत्यम् । परन्तु तस्य वर्धने तदीयं सामर्थ्यम्, आत्मविश्वासः चापि कारणम् आसीत् । तस्य गुरवः यदि समर्थाः स्युः तर्हि अपेक्षा-पूरणार्थं तैः माधवस्य साहाय्यम् अपेक्षणीयं न अभविष्यत् । वस्तुतः गुरुः शिष्यस्य विद्यां वर्धयितुं शक्नोति, न तु तस्मै श्रेष्ठतां दातुम् । शिष्यः श्रेष्ठः भविष्यति चेत् गुरुणा सन्तोष्टव्यम् । 'शिष्यात् अपि अहम् एव श्रेष्ठः भवेयम्' इति तेन न चिन्त-नीयम् । धनगुप्तस्य विषये माधवेन अनुचितं किमपि न आचरितम् । 'मम पुत्रीं वृणोतु' इति धनगुप्तः यदि पूर्वमेव अवदिष्यत् तर्हि माधवः प्रायः अङ्गीकारम् अदास्यत् । परन्तु राजकुमार्या सह विवाहनिश्चयानन्तरं धनगुप्तः स्वपुत्र्याः विवाहस्य प्रस्तावम् उपस्थापितवान् । अयं तु दोषः एव ।

पूर्वं माधवः दुष्टात् भुजङ्गात् धनगुप्तं रक्षितवान् आसीत् खलु ? तदा धनगुप्तः उक्तवान् आसीत् यत् भवता अपेक्षितं दास्यामि इति । ततः माधवः दशसहस्रं रजतनाणकानि प्राप्तवान् । अतः प्रतिफल-दानं तु न अवशिष्टम् एव । एवं च सिद्धं यत् माधवः कस्यापि विषये कृतघ्नतां न आचरितवान् इति'' इति उक्तवान् ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# विश्वासः

कनकनामकस्य कुसीदवणिजः कार्यालये शशाङ्कः नाम युवकः कार्यं करोति स्म । कार्यस्य अनुगुणं वेतनं न लभ्यते इति कारणेन सः तम् उद्योगं परित्यज्य नागभूषणनामकस्य अपरस्य धनिकस्य समीपं गत्वा उद्योगं प्रार्थितवान् ।

नागभूषणः शशाङ्कस्य वचनानि श्रुत्वा - ''भवतु, चिन्तयामः'' इति उक्त्वा अन्तः गत्वा दश रूप्यकाणाम् एकं बन्धम् आनीय शशाङ्काय दत्त्वा - ''भोः, अत्र सहस्रं रूप्यकाणि सन्ति । एतानि कनकवर्याय दत्त्वा आगच्छतु'' इति उक्तवान् ।

''अस्तु'' इति उक्त्वा शशाङ्कः तत् धनं नीत्वा अर्धघण्टायाः अनन्तरं प्रत्यागतवान् । तदा नागभूषणः तं - ''सहस्रं रूप्यकाणि सम्यक् प्रापितवान् खलु ?'' इति पृष्टवान् । 'आम्' इति उक्तवान् शशाङ्कः । तदा नागभूषणः कोपेन - ''अहं दश रूप्यकाणि अधिकतया दत्तवान् आसम् । तानि दश रूप्यकाणि भवान् अपहृतवान् अस्ति । भवादृशाय चोराय उद्योगः नास्ति अत्र'' इति उक्तवान् ।

''स्वामिन् ! भवान् सहस्रं रूप्यकाणि सन्ति इति उक्त्वा एव मम हस्ते धनं दत्तवान् आसीत् । यदि भवतः पुरतः एव धनस्य गणनाम् अकरिष्यं तर्हि भवति मम विश्वासः नास्ति इति भवति इति चिन्तयित्वा अहं तथैव गतवान् । परं कनकवर्याय दानसमये गणयित्वा दत्तवान् । तत् धनं भवते प्रत्यर्पणीयम् इत्येव अहं चिन्तितवान् आसम् । परं तदर्थम् अवकाशम् अदत्त्वा भवान् मां चोरं भावितवान् अस्ति । 'सेवकः स्वामिनि विश्वासवान् स्यात्' इति यथा भवान् भावयति तथैव - 'स्वामी सेवके विश्वासवान् स्यात्' इति अहं भावयामि । अतः मम अत्र कार्यस्य आवश्यकता नास्ति । मया कृतस्य कार्यस्य निमित्तं एतानि दश रूप्यकाणि वेतनम् इति भावयामि'' इति उक्त्वा ततः निर्गतवान् शशाङ्कः ।



कावेरीतीरप्रयाणम् -२

# जलबन्धानां निर्माणम्

रचना - *जयन्ती महालिङ्गम्* ❖ चित्राणि - *गौतमसेनः*

कोडगुतः ३० कि.मी.दूरे रामनाथपुरस्य समीपे कावेरीनद्याः वामतीरे एका महती शिला विराजते । तस्याः शिलायाः उपरि एकः शिवदेवालयः अस्ति । तत् स्थानं तत्रत्याः 'गोगर्भ' इति नाम्ना निर्दिशन्ति । रावणं हत्वा यत् पापं प्राप्तं तस्य क्षालनार्थं श्रीरामः अत्र शिवलिङ्गं पूजितवान् इति कथा श्रूयते । शङ्कराचार्यः अपि एतं देवालयम् आगत्य अस्य पावित्र्यं वर्धितवान् इति अत्रत्यानां विश्वासः ।



*रामनाथपुरस्य देवालयः*

इतः किञ्चित् अधोभागे कट्टपुरग्रामस्य समीपे प्राचीनः कश्चित् जलबन्धः कावेरीम् अवरुणद्धि । ९०० वर्षेभ्यः पूर्वं लिङ्गायतवर्गीयाः केचन शैवसंन्यासिनः (जङ्गमनामकाः) एतं निर्मितवन्तः इति कारणेन अस्य नाम 'जङ्गमघट्टः' इति प्रसिद्धं जातम् अस्ति । १२मी. उन्नतां शिलां कर्तयित्वा एषः जलबन्धः निर्मितः यत् तत् तु आश्चर्यकरम् अस्ति । न केवलं तावत्, कस्यचित् अपि तन्त्रज्ञानस्य साहाय्येन विना एषः निर्मितः अस्ति इति विषयः तु इतोऽपि आश्चर्यं जनयति । एतेषां संन्यासिनां कौशलं दृष्ट्वा विस्मिता इव कावेरी शान्ततया प्रवहति अत्र ।



चुञ्चनकट्टेसमीपे नद्याः जलं २०मी. उपरिष्टात् उत्पतति । चुञ्चनामकः वनवासी अत्र जलबन्धं निर्मितवान् । अतः एव एतस्य जलबन्धस्य नाम 'चुञ्चनकट्टे' इति प्रथितम् इति जनाः वदन्ति । अत्र कावेरी वेगेन सङ्कुचिते (अनतिविस्तृते) स्थले प्रवहति ।

तत् स्थलम् अधुना दक्षिणस्य 'धनुष्कोटिः' इति प्रसिद्धिं गतम् अस्ति । 'सीतेयबच्चलु'(सीतायाः स्नानगृहम्)नामके स्थले सीता वनवाससमये स्नानं कृतवती इति कथा श्रूयते । अतः सीतायाः स्मरणार्थं तत्रत्याः स्थानीयाः एकं मन्दिरं तत्र निर्मितवन्तः सन्ति । कावेरीनद्याः तीरे कोदण्डरामस्यापि एकः महादेवालयः अस्ति ।

एषु दिनेषु कावेरीनद्याः प्रवाहं निरुध्य निर्मिताः जलबन्धाः

*चुञ्चनकट्टे जलपातः*


कृष्णराजसागरः

तां जलाशयरूपेण परिवर्तितवन्तः सन्ति । तेषु प्रमुखः कृष्णराजसागरजलबन्धः ।

कावेर्याः उपनद्योः हेमावतीलक्ष्मणतीर्थयोः कावेर्या सह सङ्गमः 'कन्नम्बाडि'प्रदेशे भवति । तत्र एव कृष्णराजसागरजलाशयः निर्मितः अस्ति ।

कस्यचित् महापुरुषस्य स्वप्नस्य साकाररूपम् एव एषः जलाशयः । ख्यातः तन्त्रज्ञः श्री मोक्षगुण्डं विश्वेश्वरय्यः एव सः महापुरुषः । सः ब्रिटिष्शासनकाले 'सर्'बिरुदं, देशस्य स्वातन्त्र्यानन्तरं 'भारतरत्न'-बिरुदं च प्राप्तवान् अस्ति । महतां जलबन्धानां निर्माणे सः अत्यन्तं निपुणः आसीत् । मुम्बयिनगरे २५ वर्षाणि यावत् सर्वकारीयकार्यं कृत्वा सः क्रि.श. १९०९तमे वर्षे मैसूरुनगरं प्रति मुख्यतन्त्रज्ञत्वेन आगतवान् । क्रि.श. १९०३तमे वर्षे पूनानगरस्य समीपे स्थितस्य खडक्वास्लाजलबन्धस्य स्वयं-चलितस्लूयस्द्वाराणि निर्माय सः प्रसिद्धः जातः आसीत् । जलाशये जलं यदा निश्चितात् औन्नत्यात् अधिकं भवति तदा द्वाराणि स्वयमेव उद्घाटितानि भवन्ति स्म । अधिकस्य जलस्य बहिर्गमनस्य अनन्तरं द्वाराणि स्वयं पिहितानि भवन्ति । स्वेन अन्विष्टस्य एतस्य तन्त्रज्ञानस्य अनन्यस्वाम्य-(पेटेण्ट्)निमित्तं सः गौरवधनं स्वीकर्तुं न अङ्गीकृत-वान् । जलस्य व्यवस्था क्रमबद्धा भवतु इति उद्देशेन सः ब्लाक्कृषिपद्धतिं व्यवहारे आनीतवान् ।

कन्नम्बाडितः ३५की.मी.दूरे विद्यमाने शिवनसमुद्रस्थानस्य समीपे क्रि.श. १९०२तमे वर्षे देशस्य प्रथमं जलविद्युदुत्पादनकेन्द्रं संस्थापितम् । ततः एव कोलारस्य सुवर्णखनिं प्रति विद्युतः प्रेषणव्यवस्था भवति स्म । किन्तु ग्रीष्मकाले


बृन्दावनोद्यानम्

विद्युतः न्यूनता भवति स्म । कदाचित् सर्वथा विद्युदभावः भवति स्म । तदा कार्यम् एव स्थगितं भवति स्म ।

सुवर्णखनेः अधिकारिणः स्वसमस्यां विश्वेश्वरय्यं निवेद्य 'निरन्तरं विद्युतः पूरणं यथा स्यात् तथा कापि व्यवस्था कल्पनीया' इति प्रार्थितवन्तः । तदा विश्वेश्वरय्यः न केवलं कोलारस्य सुवर्णखनेः उपयोगाय, अपि तु सहस्रशः कृषिकाणां लाभाय चापि काञ्चित् महतीं योजनाम् एव कृतवान् । तदर्थं सः "कावेरीनद्याः प्रवाहं निरुध्य जलबन्धः निर्मातव्यः" इति महाराजं सूचितवान् । तस्याः योजनायाः साकारीकरणार्थं २५ कोटिरूप्यकाणि अपेक्षितानि आसन् । सः च व्ययः मैसूरुराज्येन कृषिकार्यार्थं पञ्चाशद्वर्षेषु कृतस्य व्ययस्य समानः आसीत् । तावतः धनस्य अपेक्षा अस्ति इति श्रुत्वा यद्यपि महाराजः नाल्मडिकृष्णराजः दिग्भ्रान्तः, तथापि योजनायाः कार्यान्वयनाय सम्पूर्णां व्यवस्थां कर्तुम् अङ्गीकृतवान् सः ।



कोलारस्य सुवर्णखन्यां कार्यनिरताः कर्मकराः

क्रि.श. १९११तमे वर्षे कन्नम्बाडिजलबन्धस्य निर्माणाय भूमेः खननम् आरब्धम् । जलबन्धः २६२१मीटर्परिमितदीर्घः ४३ मीटर्परिमित-उन्नतः च भवेत् इति योजना कृता । तस्मिन् जलाशये १४०० मिलियन्-क्यूबिक्-मीटरपरिमितं जलं सङ्ग्रहीतुं शक्यम् आसीत् । क्रि.श.१९१५तमे वर्षे बन्धस्य औन्नत्यं २४ मीटर्परिमितं वर्धितम् । अतः एव अधुना कोलारस्य सुवर्णखनेः कार्यं विद्युतः अभावं न अनुभवति । क्रि.श. १९२४तमे वर्षे जलबन्धस्य औन्नत्यं योजनानुसारं पूर्णतया वर्धितम् । एतस्य विशेषः नाम एषः जलबन्धः काङ्क्रीट्मिश्रणेन न निर्मितः, अपि तु स्वदेशीयेन 'सुर्खी'नामकेन मिश्रणेन निर्मितः अस्ति । सुधां, पक्वाः इष्टिकाः च योजयित्वा सम्यग्रूपेण पेषणं कृत्वा एतस्य सुर्खीनामकस्य मिश्रणस्य निर्माणं कुर्वन्ति । तदा तत् मिश्रणं तस्मिन् प्रदेशे अत्यन्तं न्यूनमूल्येन उपलभ्यते स्म । शुष्कतां प्राप्तुम् अस्य मिश्रणस्य किञ्चित् अधिकः कालः अपेक्षितः । परं शोषणस्य अनन्तरं काङ्क्रीटवत् एव एतत् सुदृढं भवति । एतेन मिश्रणेन अपेक्षातः अधिका एव शक्तिः दत्ता अस्ति कन्नम्बाडिजलबन्धस्य ।



महाराजस्य कृष्णराजस्य स्मरणार्थम् एतस्य जलाशयस्य 'कृष्णराजसागरः' इति नाम कृतम् अस्ति । जलबन्धतः १८ मी. अधोभागे वृन्दावननामकं सुन्दरम्

उद्यानं निर्मितवन्तः सन्ति । १९२२तमे वर्षे एतस्य उद्यानस्य कार्यम् आरब्धम् । ततः पश्चात् एव देशस्य अनेकेषां जलाशयानां निकटे अपि उद्यानानां वर्धनम् आरब्धम् । एतस्मिन् विषये एतत् उद्यानम् समग्रदेशस्य एव मार्गदर्शकरूपेण अस्ति इति वक्तुं शक्यते । त्रिषु स्तरेषु विद्यमानम् एतत् उद्यानम् अष्ट हेक्टेर् विशालम् अस्ति । क्रि.श. १९३६तमे वर्षे सार्वजनिकानाम् उद्यानदर्शनाय प्रदत्ता अनुमतिः अद्यापि अनुवर्तते ।

पश्चात् एतस्मात् जलशयात् एव १८ मी.गभीरा ४५कि,मी. दीर्घा कुल्या निर्मिता । एतस्याः कुल्यायाः निर्माणेन ३६,००० हेक्टेर्परिमितभूमौ कृष्यर्थं जलव्यवस्था कल्पिता अभवत् । एतां महायोजनां १०,००० जनाः कर्मकराः, बहवः तन्त्रज्ञाः च अहोरात्रं कार्यं कृत्वा समापितवन्तः सन्ति । कदाचित् नद्याः प्रवाहस्य वर्धनेन नूतनतया खातायाः कुल्यायाः अपायः भवेत् इति विचिन्त्य प्रवाहस्य अन्यत्र प्रेषणाय तन्त्रज्ञैः कर्मकरैः च रात्रौ दीपस्य प्रकाशे अपि कार्यं करणीयम् अभवत् इति श्रूयते ।

तस्मिन् प्रदेशे जलबन्धः निर्मातव्यः इति विश्वेश्वरय्यः ऐदम्प्राथम्येन न चिन्तितवान् । ततः पूर्वम् अन्यैः अपि प्रयत्नः कृतः आसीत् । जलबन्धस्य आधारशिलास्थापनाय कर्मकराः यदा कार्यं कुर्वन्तः आसन् तदा क्रि.श. १७९४तमे वर्षे निखातं किञ्चित् शिलाशासनं तैः प्राप्तम् । तच्च पर्षियन्भाषया लिखितम् आसीत् । तस्मिन् इत्थं लिखितम् आसीत् – "परमकरुणामयस्य भगवतः नाम्नि तस्य दासः अहं हजरत् टिप्पूसुल्तानः कावेरीनद्याः जलबन्धं निर्मातुं राजधान्याः पश्चिमायां दिशि आधारशिलां स्थापयन् अस्मि । कार्यारम्भकरणं मम कर्तव्यम् । किन्तु तस्य पूरणं तु भगवदधीनम्" इति ।

मैसूरुसंस्थानस्य सचिवः सन् विश्वेश्वरय्यः (१८६०-१९६२) संस्थानस्य उन्नत्यै बहूनि कार्याणि कृतवान् । भद्रावती ऐरन् अण्ड् स्टील् वर्क्स्, मैसूरु-विश्वविद्यालयः, सर्वकारीयफेनककार्यागारम् (सोप् फ्याक्टरी) इत्यादीनां बहूनां संस्थानाम् आरम्भाय विश्वेश्वरय्यस्य बुद्धिमत्ता कार्यकौशलं मार्गदर्शनं च कारणीभूतम् अस्ति । १९१३तः १९१८ पर्यन्तं यदा सः मैसूरुसंस्थानस्य सचिवः आसीत् तदा तत्र पाठशालानां संख्या द्विगुणिता अभवत् । ततः पूर्वं सः तत्र प्रधानतन्त्रज्ञत्वेन कार्यं कृतवान् ।



*सर् मोक्षगुण्डं विश्वेश्वरय्यः*

औद्योगिकवृद्ध्या एव भारतस्य उन्नतिः साध्या इति तस्य दृढविश्वासः आसीत् । "कार्यागारस्य निर्माणं करोतु, अथवा नष्टः भवतु" इत्येव तस्य घोषणम् आसीत् । स्वतन्त्र-भारतस्य पञ्चवार्षिकयोजनायाः निर्माणात् बहुपूर्वमेव सः तादृशयोजनानां विषये पुस्तकानि लिखितवान् आसीत् । सः वार्धक्ये अपि अत्यन्तं क्रियाशीलः आसीत् । स्वस्य ८६तमवर्षपर्यन्तमपि सः स्वस्य गृहस्य ७५ पादपरिमित-औन्नत्ययुक्तानि सोपानानि अन्येषां साहाय्येन विना सुललिततया आरोढुं शक्तः आसीत् । तस्मिन् वयसि अपि सः आरोग्यवान्, निरन्तरकार्यशीलः च आसीत् ।



*नाल्मडि कृष्णराज ओडेयर्*



# परिवर्तनम्

कस्मिंश्चित् ग्रामे राजेशः रत्ना चेति दम्पती आस्ताम् । तौ लघुविषयम् अपि महान्तं कृत्वा भिन्नाभिप्रायकारणेन सदा कलहं कुरुतः स्म ।

तयोः कलहस्य कारणं श्रुत्वा प्रतिवेशिजनाः आश्चर्यचकिताः भूत्वा वदन्ति स्म - ''कृपया भवन्तौ लघुविषयस्य कारणेन कलहं न कुरुताम्'' इति । किन्तु तेन प्रयोजनं तु न भवति स्म ।

तयोः दम्पत्योः बहुकालतः अपत्यं न आसीत् । चिरकालानन्तरं तयोः रामः नाम पुत्रः जातः । तं पुत्रं प्राणवत् पालयतः स्म तौ दम्पती । तथापि तयोर्मध्ये कलहः तु न्यूनः न जातः एव । रामः यदा चिन्तनसमर्थः जातः तदा सः मातापित्रोः कलहस्वभावं सोढुं न शक्तः । यदा ग्रामजनाः तयोः दम्पत्योः उपहासं कुर्वन्ति स्म तदा सः बहु खिन्नः भवति स्म । मातापितरौ कथं परिवर्तनीयौ इत्येव तस्य चिन्ता आसीत् । एवं द्वादशवर्षीयस्य एव तस्य मातापित्रोः कलहस्य विषयः शिरोवेदनाजनकः अभवत् ।

प्रतिदिनं सः धेनूः चारणार्थं नयति स्म । तत्रापि सः तम् एव विषयं चिन्तयन् उपविशति स्म । एवं यदा सः कदाचित् चिन्तयन् उपविष्टवान् आसीत् तदा तद्ग्रामीणः मन्त्रवादी तत्र आगतः । चिन्तामग्नं रामं दृष्ट्वा सः पृष्टवान् - ''रे बाल ! कः क्लेशः भवतः ? किमर्थम् एवं चिन्ताकुलः सन् भवान् उपविष्टवान् अस्ति ?'' इति ।

तदा रामः स्वस्य मातापित्रोः विषयं तस्मै निवेद्य - ''यावत् एतौ कलहं कुरुतः तावत् मम चिन्ता अपगता न भविष्यति'' इति उक्तवान् ।

तदा मन्त्रवादी उक्तवान् - ''भोः बाल !

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



कदापि सः पूर्वं मयि एवं कोपं न प्रदर्शितवान् । अपि च सः युतकं प्रक्षालयतु इति मां न उक्तवान् आसीत् अपि । किमर्थं सः वृथा कोपं कृतवान् ? तस्मिन् दृश्यमानस्य एतादृशपरिवर्तनस्य कारणं किं स्यात् ?'' इति चिन्तयन्ती पुत्राय किमपि उत्तरम् अदत्त्वा तूष्णीं ततः वस्तूनि आनेतुम् आपणं प्रति गतवती ।

किञ्चित्समयानन्तरं राजेशः क्षेत्रतः प्रत्यागतवान् । गृहे उपविष्टं म्लानवदनं पुत्रं दृष्ट्वा सः पृष्टवान् - ''किं भोः ! किमर्थम् एवम् उपविष्टः अस्ति भवान् ? भवतः आरोग्यं सम्यक् नास्ति किम् ?'' इति ।

तदा रामः उक्तवान् - ''अस्मिन् गृहे मम विषये कः वा चिन्तयति ? भवतोः तु परस्परं कलहार्थम् एव समयः पर्याप्तः न भवति'' इति ।

चिन्तां न करोतु । मातापित्रोः परिवर्तनम् आनेतुं भवता प्रथमम् आत्मनि परिवर्तनम् आनेतव्यम् । तदर्थं किं करणीयम् इति अहम् उपायं सूचयामि । अहं यथा वदामि तथा करोति चेत् भवतः समस्या परिहृता भविष्यति'' इति उक्त्वा किं करणीयम् इति तं सूचितवान् ।

सायङ्काले धेनूः गृहं प्रति नीत्वा रामः मातरम् उद्दिश्य - ''अम्ब ! मम युतकं प्रक्षाल्य आतपे प्रसारयतु इति प्रातः एव भवतीम् उक्तवान् आसं खलु ? भवती विस्मृतवती एव वा ? एषः एकः पुत्रः अस्ति इत्यपि स्मरणं न भवति भवत्याः'' इति कोपेन उक्तवान् ।

पुत्रस्य वचनं श्रुत्वा रत्ना चकिता अभवत् । ''किमर्थं पुत्रः एवं वदन् अस्ति ? -

''भवान् यद् वक्तुम् इच्छति तत् स्पष्टतया वदतु'' इति उक्तवान् राजेशः ।

तदा रामः उक्तवान् - ''धर्तुम् उत्तमानि वस्त्राणि एव न सन्ति मम । वर्षाकालः वा भवतु, ग्रीष्मकालः वा भवतु, मया तु रिक्तपादाभ्याम् एव अटनीयम् । धर्तुं पादरक्षा अपि नास्ति । भवतोः एकमात्रपुत्रस्य मम गतिः एतादृशी'' इति ।

पुत्रस्य वचनेन बहु खिन्नः राजेशः । 'अद्यपर्यन्तम् एषः स्वस्य विषये चिन्तनं न कृतवान् । स्वस्मै किमपि न याचितवान् अपि । तादृशः एषः किमर्थम् अद्य एवं सञ्जातः ?' इति चिन्तां कृतवान् ।

पितापुत्रयोः सम्भाषणसमये आपणात् प्रत्यागता रत्ना बहिः एव स्थित्वा तयोः

सम्भाषणं श्रुतवती । पत्ये अपि पुत्रः रुष्टः अस्ति इति ज्ञातवती सा ।

रात्रौ भोजनसमये अपि विनाकारणं मातापितृभ्यां कुपितवान् रामः । मन्त्रवादिनः सूचनानुसारं सप्ताहपर्यन्तम् अपि एवम् एव व्यवहृतवान् सः । पुत्रे जातम् एतादृशं परिवर्तनं सोढुम् अशक्ता रत्ना एकस्मिन् दिने पतिम् उक्तवती - ''भोः, पुत्रे किमपि परिवर्तनं भवता लक्षितमेव इति भावयामि । तस्य काचित् भूतचेष्टा एव कारणम् इति मम अभिप्रायः । अतः कस्यचित् मन्त्रवादिनः समीपम् एतं नयाम'' इति ।

तदा राजेशः उक्तवान् – ''मन्त्रवादिनः समीपं गमनं मास्तु । एतं मानसिकवैद्यस्य समीपं नयाम'' इति ।

''भूतचेष्टां वैद्यः कथं वा निवारयति ? मन्त्रवादी चेत् मन्त्रपठनेन अनुक्षणम् एव भूतोच्चाटनं करिष्यति'' इति उक्तवती रत्ना ।

''एषा भूतचेष्टा न । एषः कश्चन मानसिकरोगः । अतः वैद्यस्य समीपम् एव गच्छाम'' इति उक्तवान् राजेशः । एवं तयोः मध्ये कलहः आरब्धः एव । कलहं कुर्वन्तौ तौ दृष्ट्वा रामः तूष्णीम् उपविष्टवान् । किञ्चित्कालानन्तरं सः तौ उक्तवान् - ''कलहः मास्तु । अस्माकं ग्रामस्य मन्त्रवादिनः समीपं चेत् अहम् आगमिष्यामि'' इति ।

पुत्रः आगमनम् अङ्गीकृतवान् इति तृष्टौ तौ द्वौ अपि कलहं परित्यज्य तं ग्रामस्य मन्त्रवादिनः समीपे नीतवन्तौ । मन्त्रवादिने सर्वं निवेद्य - ''कथमपि एतं भूतपीडातः मुक्तं करोतु'' इति प्रार्थितवन्तौ च ।

''अहं भवन्तौ प्रत्येकम् आहूय प्रश्नं पृच्छामि । यदि भवन्तौ सम्यक् उत्तरं



दास्यतः तर्हि तं भूतपीडातः मुक्तं करिष्यामि'' इति उक्तवान् मन्त्रवादी ।

अनन्तरं सः रत्नाम् आहूय – ''रामः भवत्याः एव पुत्रः खलु ?'' इति पृष्टवान् ।

''आम्'' इति उक्तवती रत्ना ।

अनन्तरं सः राजेशम् आहूय तम् एव प्रश्नं पृष्टवान् । तदा राजेशः अपि 'आम्' इति उत्तरं दत्तवान् । अनन्तरं मन्त्रवादी तौ द्वौ अपि आहूय – ''भवतोः उत्तरं सम्यक् नास्ति । अतः सम्यक् चिन्तयित्वा आगामि-सप्ताहे आगच्छताम्'' इति उक्तवान् ।

अनन्तरसप्ताहे यदा तौ गतवन्तौ तदा यथापूर्वं तौ पृथक् आहूय पृष्टवान् मन्त्रवादी । तदा राजेशः स्वबुद्धिमत्तां प्रदर्शयन् उक्तवान् – ''रामः मम पत्न्याः पुत्रः'' इति । रत्ना तु – ''रामः मम एव पुत्रः'' इति उक्तवती ।

उभयोः अपि उत्तरं श्रुत्वा मन्त्रवादी हसन् – ''अधुना अपि भवन्तौ सम्यक् उत्तरं न दत्तवन्तौ । अतः इतोऽपि सम्यक् चिन्तनं कृत्वा आगामिसप्ताहे सम्यक् उत्तरं वदताम्'' इति उक्त्वा तौ प्रेषितवान् ।

रामस्य कोपशीलता तु दिने दिने वर्धते स्म । अतः चिन्ताक्रान्तौ रत्नाराजेशौ परस्परं समालोचनं कृत्वा किम् उत्तरं दातव्यम् इति उभौ अपि ऐकमत्येन निश्चित्य अनन्तर-सप्ताहे मन्त्रवादिनः समीपं गतवन्तौ । यदा सः तौ प्रत्येकम् आहूय पृष्टवान् तदा उभौ अपि – ''रामः आवयोः पुत्रः'' इति उत्तरं दत्तवन्तौ ।

तयोः उत्तरस्य श्रवणानन्तरं मन्त्रवादी तौ उक्तवान् – ''अद्य भवन्तौ सम्यक् उत्तरं दत्तवन्तौ । न केवलं तावत्, अद्य भवन्तौ स्वस्य स्वभावे अपि परिवर्तनम् आनीतवन्तौ स्तः । परस्परम् अवगत्य समञ्जनं कृत्वा जीवन्ति चेत् जीवनं सुखमयं भवति । 'मम अभिप्रायः एव समीचीनः' इति विचिन्त्य यदि व्यवह्रियते तर्हि आजीवनम् अशान्तिः एव भवति । भवतोः कलहकारणतः एव रामः तथा जातः अस्ति । मम वचनानुसारम् एव सः तथा व्यवहृतवान् अस्ति, न तु पिशाचपीडातः । इतः परम् अपि एवम् एव सौहार्दतया जीवनं कुरुताम्'' इति ।

एवं रत्नाराजेशौ स्वदोषान् अवगत्य आत्मनि परिष्कारम् आनीय सुखेन जीवनं कृतवन्तौ ।



आंग्लान् सम्मुखीकृतवन्तः धीराः – ७

# वेलुतम्बि

रचना – मीरा उग्रा ◆ चित्रम् – टि.जि. शेट्टि

२०० वर्षेभ्यः पूर्वं महाराजः बलरामवर्मा तिरवाङ्कूरुसंस्थानं परिपालयति स्म । तस्य मुख्यमन्त्री आसीत् वेलुतम्बी ।



कदाचित् वेलुतम्बी ईस्ट्-इण्डिया-संस्थायाः प्रतिनिधिं कर्नल्मेकाले-वर्यम् अवगणितवान् ।




तस्मिन् काले अन्ये राजानः यथा ईस्ट्-इण्डियासंस्थायाः सैन्यसाहाय्यं स्वीकुर्वन्ति स्म, तथैव बलरामवर्मा अपि स्वीकरोति स्म । कदाचित् मेकालेमहोदयः बलरामवर्मणे एकं सूचनापत्रं लिखितवान् –




मेकालेवर्येण पुनः पुनः अवहेलनकारीणि पत्राणि लिखितानि । अन्ते –




शीघ्रातिशीघ्रं वेलुतम्बी सैन्ये नूतनजनान् नियोज्य दुर्गं सुदृढं कृतवान् । एकस्मिन् दिने –



मेकालेमहोदयाय पत्रं प्रेषयित्वा तम्बिवर्यस्य सैनिकाः कुन्निपिळ्ळनेतृत्वे नौकया प्रयाणम् आरब्धवन्तः ।



तम्बिवर्यस्य सैनिकाः १८०८तमवर्षस्य डिसेम्बर्मासस्य २८दिनाङ्के मध्यरात्रे मेकालेवर्यस्य निवासस्य उपरि आक्रमणं कृतवन्तः । मेकाले दिग्भ्रान्तः अभवत् ।




सैनिकाः मेकालेगृहं लुण्ठितवन्तः । आवश्यकानि अमूल्यानि पत्राणि नाशितवन्तः । परन्तु मेकाले पलायितवान् ।




अनन्तरदिने अलेप्पि-क्विलोन्-नगरयोः उपरि आक्रमणं कृतवन्तः ।



तम्बी क्विलोन्नगरस्य पूर्वदिशि स्थितं 'कुण्डारा'नगरं गत्वा एकां सूचनां प्रकाशितवान् -



'अस्माकं सम्पत्तेः रक्षणाय स्थितः अद्वितीयः मार्गः नाम ब्रिटिष्जनानाम् इतः प्रेषणम्' इति वेलुतम्बी सर्वत्र वार्तां प्रसारितवान् ।



वेलुतम्बितः प्रेरणां प्राप्य सामान्यजनाः उत्तेजिताः । ते अपि आंग्लानाम् उपरि आक्रमणं कृतवन्तः ।



जनानाम् आक्रमणस्य वार्ता संस्थायाः मद्रास्मुख्य-कार्यालयं गता । अनुक्षणं सर्वतः क्विलोन्नगरं प्रति साहाय्यार्थं संस्थायाः सैनिकाः गताः ।



१८०९तमवर्षस्य जनवरीमासस्य २८दिनाङ्के उभयपक्षयोः सैनिकानां मध्ये भीकरं युद्धं प्रवृत्तम् । तम्बिवर्यस्य सैन्यं पराजितम् अभवत् ।



अनतिकाले एव, (फेब्रवरी १९दिनाङ्के) 'आरोम्बोळी'-नगरस्य समीपे अपि तम्बी पराजयम् अनुभूतवान् ।






ब्रिटिषुसैन्यं तिरुवनन्तपुरं प्रति यदा आगच्छत् आसीत् तदा तम्बी पुनः एकवारं बलरामवर्माणं द्रष्टुं गतवान् ।
''मम अन्तिमप्रणामं वक्तुम् आगतवानस्मि प्रभो ! एतद् पत्रं ब्रिटिषुप्रतिनिधेः कृते । स्वीकरोतु एतत् ! जातस्य एतस्य युद्धस्य कारणपुरुषः अहमेव । भवतः अनुमतिं विना एषः व्यवहारः मया कृतः अस्ति'' इति एतस्मिन् पत्रे स्पष्टीकृतमस्ति । एतस्मात् व्यवहारात् यस्यकस्यापि हानिः न भवेत् ।


परन्तु तम्बिवर्येण लिखितेन पत्रेण मेकालेवर्यस्य तृप्तिः न अभवत् ।
'एतस्मिन् युद्धे भवतः निर्दोषित्वं प्रमाणीकर्तुं वेलुतम्बिवर्यम् अन्विष्य गृहीत्वा आनयतु' इति मेकालेवर्यः आदिष्टवान् ।


महाराजस्य जनाः सर्वत्र तम्बिवर्यस्य शोधनम् आरब्धवन्तः । तम्बी वेषान्तरेण अटन् आसीत् । अन्ते सः, तस्य अनुजः च मुन्नडीप्रदेशस्य एकस्मिन् देवालये स्तः इति ज्ञातम् ।
''बहिः सैनिकानां पादध्वनिः श्रूयमाणः अस्ति खलु ? अहं तैः गृहीतः न भवेयम् । अवमाननं सोढुं न इच्छामि ।''


मां मारयतु !
न शक्यते मया ।


तम्बी छुरिकया आत्मानं स्वयमेव विद्ध्वा अधः पतितवान् । परन्तु प्राणाः न गताः । अनन्तरं -
मूढ ! इदानीं वा मम शिरः कर्तयतु ।
तदा अनुजः अग्रजस्य आज्ञानुसारं कृतवान् । तम्बिवर्यः आत्मगौरवेण यथा जीवितवान् तथैव वीरमरणमपि प्राप्तवान् ।
समाप्तम्




पाण्डवैः सह दौत्यं समाप्य हस्तिनापुरम् आगतः सञ्जयः धृतराष्ट्रस्य दर्शनं कृत्वा – ''हे राजन् ! 'सर्वस्य कारणकर्ता भवान् एव' इति धर्मराजः उक्तवान् अस्ति । भवान् लोकापवादम् अपि प्राप्तवान् अस्ति । धर्मराजस्य सन्देशं श्वः सभायां सर्वेषां सान्निध्ये कथयिष्यामि'' इति उक्त्वा स्वगृहं प्रतिगतवान् ।

सञ्जयस्य गमनानन्तरं धृतराष्ट्रः समालोचनाय विदुरम् आनायितवान् । यदा विदुरः आगतः तदा – ''भोः विदुर ! पाण्डवानां सकाशात् सञ्जयः प्रतिनिवृत्तः अस्ति । सः मां निन्दितवान् अस्ति बहुधा । अतः सः श्वः सभायां किं वक्ष्यति इति चिन्तया एव मम निद्रा अपगता अस्ति । मम मनः बहु व्याकुलम् अस्ति । कथमपि मम सन्तापं दूरीकरोतु'' इति उक्तवान् ।

धृतराष्ट्रस्य निद्राहीनतायाः कारणं पाण्डवेभ्यः भयम् एव इति ज्ञात्वा विदुरः उक्तवान् – ''हे राजन् ! भवान् राज्यस्य दुराशया असत्यम् अवदन् स्वस्य वंशस्य रक्षणं चिन्तयतु । दुर्योधनविषयकव्यामोहेन भवान् पूर्वं सज्जनान् पाण्डवान् दूरीकृतवान् । अधुना उद्धतं दुर्योधनं दृष्ट्वा अपि भवान् न खिद्यते । अतः इदानीं वा विवेकं प्राप्य पाण्डवान् आहूय तेभ्यः कांश्चन ग्रामान् ददातु । भवन्तं, भवतः पुत्रान् च आपदि ते एव रक्षिष्यन्ति'' इति ।

तदा धृतराष्ट्रः उक्तवान् – ''भवता उक्तं युक्तमेव अस्ति । अहम् अपि सदा पाण्डवानां हितम् एव चिन्तयामि । किन्तु यदा दुर्योधनस्य स्मरणं भवति तदा मम बुद्धिः विपरीता भवति । सर्वमपि दैवस्य लीला । किं करवाणि ?'' इति ।

परेद्यवि प्रातः धृतराष्ट्रस्य सभायां महान् सम्मर्दः आसीत् । दुर्योधनस्य साहाय्यं कर्तुं



आगताः सर्वे अपि राजानः सञ्जयेन आनीतं पाण्डवानां सन्देशं श्रोतुम् उत्सुकाः सन्तः सभायां सम्मिलिताः आसन् ।

अनतिकाले एव सभां प्रविष्टवान् सञ्जयः सर्वान् प्रणम्य उक्तवान् - ''भोः महावीराः राजानः, अहं पाण्डवानां समीपं गत्वा आगतः अस्मि । ते भवतां सर्वेषां कुशलं विचारितवन्तः सन्ति । अहम् अस्माकं महाराजस्य विचारान् निवेद्य आगतवान् अस्मि'' इति ।

तदा धृतराष्ट्रः तम् उद्दिश्य - ''सञ्जय ! भवान् गत्वा मम विचारान् पाण्डवेभ्यः निवेद्य आगतवान् यत्, तेन अहं नितरां सन्तुष्टः अस्मि । सर्वेषां पाण्डवानां सन्देशस्य श्रवणे तत्रापि अर्जुनस्य विचारस्य श्रवणे मम अधिका इच्छा अस्ति । अतः अर्जुनः किम् उक्तवान् इति आदौ निवेदयतु'' इति उक्तवान् ।

राज्ञः सूचनानुसारं सञ्जयः सभाम् उद्दिश्य - ''सर्वान् उद्दिश्य अर्जुनः एवम् उक्तवान् अस्ति - 'दुर्योधनादयः बहूनि पापानि एव कृतवन्तः, न तु तेषां प्रायश्चित्तम् । यदि युद्धम् आरभ्यते तर्हि तैः स्वपापानां फलम् अवश्यमेव भोक्तव्यं भविष्यति । अद्यपर्यन्तं धर्मराजः सर्वमपि सहनया सोढवान् अस्ति । किन्तु सः यदि कुपितः भविष्यति तर्हि तस्य कोपाग्नौ सर्वे निश्चयेन भस्मीभविष्यन्ति एव । भीमः एकः एव यदा समग्रां कौरवसेनां नाशयिष्यति तदा दुर्योधनः पश्चात्तापम् अनुभवेत् एव । नकुलसहदेवौ, विराटः, द्रुपदः, उपपाण्डवाः, अभिमन्युः, अयम् अर्जुनश्च यदा युद्धरङ्गे वीरावेशेन युद्धं करिष्यन्ति, तदा दुर्योधनः किमपि कर्तुं न प्रभविष्यति, ऋते दर्शनात् । अहं सर्वान् ज्येष्ठान्, गुरून् च प्रणम्य केवलम् अस्माकं राज्यार्थम् एव युद्धं करोमि । पाण्डवैः जीवति सति कौरवाः कथं वा निरातङ्कं राज्यवैभोगम् अनुभोक्तुं शक्ष्यन्ति ? यदि कौरवाः युद्धे अस्मान् जयेयुः तर्हि लोके धर्मः नष्टः इत्येव अर्थः । परं तथा कदापि न भविष्यति । यदि युद्धम् अनिवार्यं तर्हि धृतराष्ट्रस्य कुलस्य नाशः अपि अनिवार्यः । अतः किं करणीयम् इति भवन्तः एव चिन्तयन्तु इति'' इति उक्तवान् ।

तदा भीष्मः दुर्योधनं प्रति - ''पुत्र ! कर्णस्य, शकुनेः, दुःशासनस्य च दुर्वचनानि श्रुत्वा भवान् कुमार्गे गच्छन्

अस्ति । कथमपि कौरवपाण्डवयोः युद्धं निवारयतु । अन्यथा सर्वनाशः निश्चितः'' इति उक्तवान् ।

भीष्मस्य वचनेन कुपितः कर्णः - ''रे भीष्म ! मम विषये एतादृशानि वचनानि यदि अन्यः कोऽपि अवदिष्यत् तर्हि सः भूतले अधुना जीवितः न अभविष्यत् । अहं राजधर्मं सम्यक् एव जानामि । दुर्योधनः पाण्डवेभ्यः कमपि द्रोहं न कृतवान् अस्ति । अपि च युद्धे अहम् एकः एव सर्वान् पाण्डवान् जेतुं समर्थः अस्मि । ये जन्मना अस्माकं शत्रवः तैः सह मैत्री कथं वा साध्या ? धृतराष्ट्रस्य दुर्योधनस्य च प्रियम् अहं सर्वदा करिष्यामि एव । तदेव मम जीवनस्य लक्ष्यम्'' इति उक्तवान् ।




तदा भीष्मः धृतराष्ट्रम् उद्दिश्य उक्तवान् - ''राजन् ! एषः कर्णः 'अहम् एकः एव पाण्डवान् संहरिष्यामि' इति वदन् एव भवति । किन्तु पाण्डवैः यादृशानि कार्याणि कृतानि तादृशेषु एकमपि एषः कर्तुं न प्रभवति, न कृतवान् च । तथापि नीचः दुर्बुद्धिः एषः पाण्डवानां विषये एतादृशानि निन्दनवचनानि सर्वदा वदति । गोग्रहण-समये यदा अर्जुनः एतस्य अनुजं मारितवान्, तदा एषः किं कृतवान् ? घोषयात्रावसरे गन्धर्वाः यदा दुर्योधनं बद्ध्वा नीतवन्तः तदा एषः किं कुर्वन् आसीत् ? तदा दुर्योधनं पाण्डवाः एव खलु विमोचितवन्तः ? कर्णः केवलं वाचालः, न तु कार्यकुशलः । अतः एतस्मिन् विश्वस्य भवान् युद्धं न करोतु'' इति ।

भीष्मस्य वचनं समर्थयन् द्रोणः अपि एवम् उक्तवान् - ''राजन् ! भीष्मस्य सूचना योग्या एव अस्ति । अर्जुनः सञ्जयद्वारा यं सन्देशं प्रेषितवान् अस्ति सः मिथ्या न । अतः अधुना वा पाण्डवैः सह सन्धिं करोतु'' इति ।

भीष्मद्रोणयोः वचनस्य विषये प्रति-क्रियाम् अप्रदर्शयन् धृतराष्ट्रः - ''धर्मराजः किम् उक्तवान् ?'' इति सञ्जयं पृष्टवान् ।

तदा सञ्जयः युद्धे धर्मराजस्य साहायकाः के इति विवृत्य - ''धर्मराजः युद्धाय सिद्धः एव अस्ति'' इति उक्तवान् ।

वस्तुतः तु भीमस्य स्मरणतः एव अधिकं भयं भवति स्म धृतराष्ट्रस्य । पाण्डवपक्षस्य सर्वेषां वीराणां सामर्थ्यस्य समानम् अस्ति भीमस्य एकस्य एव बलम् इति धृतराष्ट्रः सम्यक् जानाति स्म । भीमस्य बलं कीदृशम् इति भीष्मः, द्रोणः, कृपः, धृतराष्ट्रश्च



जानन्ति स्म एव । भीष्मः, द्रोणः, कृपः च यद्यपि कौरवाणां परतया एव युद्धार्थं सिद्धाः आसन्, तथापि पाण्डवानां विषये तेषां द्वेषः नास्ति इति धृतराष्ट्रः जानाति स्म । एतस्य सर्वस्य स्मरणेन धृतराष्ट्रस्य नेत्रयोः पुरतः कौरवाणां नाशस्य चित्रम् उपस्थितम् अभवत् ।

इत्थं सर्वमपि पर्यालोच्य धृतराष्ट्रः – ''युद्धेन कौरववंशस्य नाशः अपरिहार्यः इति मम भासते । तस्मात् युद्धस्य अकरणम् एव क्षेमकरम् । यदि सर्वे अङ्गीकरिष्यन्ति तर्हि वयं शान्तिसन्धानार्थं प्रयत्नं करिष्यामः'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा सञ्जयः उक्तवान् – ''राजन् ! एतस्याः समस्यायाः कारणं भवान् एव । कुरुजाङ्गलात् भिन्नाः ये प्रदेशाः भवतः राज्ये सन्ति ते सर्वे पूर्वं पाण्डवैः जित्वा भवते समर्पिताः आसन् खलु ? किन्तु तत् सर्वं भवान् स्वायत्तीकृतवान् । तत् सर्वमपि मदीयम् एव इति भावः भवति अस्ति । पाण्डवानां सामर्थ्यं ज्ञातवन्तः अनेके राजानः पाण्डवानां पक्षं प्रति गतवन्तः सन्ति अपि । अतः इदानीं वा यदि भवान् दुर्योधनस्य निग्रहणं न करिष्यति तर्हि महाहानिः सम्भविष्यति'' इति ।

तदा दुर्योधनः कोपेन पितरं प्रति – ''वयं पराजिताः भवेम इति भीतिः किमर्थं भवतः ? वयं निश्चयेन जेष्यामः । भवन्तं, विदुरं च विहाय अन्ये सर्वे मारणीयाः इति कृष्णस्य उद्देशः अस्ति । स्वस्य जयविषये यदि पाण्डवानां विश्वासः स्यात् तर्हि ते किमर्थं पञ्चग्रामान् याचेरन् ? भीमस्य स्मरणतः भवतः किमर्थं भयम् इति अहं न अवगच्छामि । गदायाः एकेन प्रहारेणैव अहं भीमं संहरिष्यामि । पितामहः भीष्मः एकः एव पाण्डवसेनायै अलम् । यदि तेन सह द्रोणः, अश्वत्थामा इत्यादयः भवेयुः तर्हि ते अर्जुनं नाशयितुं न प्रभवन्ति किम् ? कर्णस्य समीपे तु इन्द्रेण दत्तं दिव्यास्त्रम् अपि अस्ति । पाण्डवानां पक्षे वस्तुतः वीराः नाम पाण्डवाः, दृष्टद्युम्नः, सात्यकिः च एव । तादृशाः अस्माकं पक्षे बहवः सन्ति'' इति विश्वासपूर्वकम् उक्तवान् ।

अनन्तरं सः सञ्जयम् उद्दिश्य – ''पाण्डवानां युद्धतन्त्रं किम् ? भवान् सर्वं ज्ञात्वा आगतवान् खलु ?'' इति पृष्टवान् ।

तदा सञ्जयः कौरवपक्षस्य केन योद्धा सह पाण्डवपक्षस्य कः योद्धा युद्धं करिष्यति इति विस्तरेण उक्तवान् ।

सञ्जयस्य वचनस्य श्रवणात् नितरां भीतः धृतराष्ट्रः पुनश्च दुर्योधनम् इत्थं बोधितवान् - "वत्स ! युद्धस्य विचारं परित्यजतु भवान् । तेन सर्वे भवन्तं श्लाघन्ते । सुखेन जीवितुं भवते अर्धराज्यं पर्याप्तं खलु ? पाण्डवेभ्यः राज्यस्य कञ्चित् भागं ददातु । अविवेकेन वृथा सर्वनाशं न स्वागतीकरोतु" इति ।

"अहं कस्यापि वचनं न शृणोमि । पाण्डवान् जेतुं कर्णः, दुःशासनः च पर्याप्तौ । अतः व्यर्थसम्भाषणेन किम् ? अहं तिलपरिमितां भूमिम् अपि पाण्डवेभ्यः न दास्यामि" इति उक्तवान् दुर्योधनः ।

कर्णः दुर्योधनस्य वचनं समर्थयन् - "अहम् एकः एव युद्धस्य समग्रं भारं वोढुं समर्थः अस्मि । पाण्डवान् सर्वान् अहम् एकः एव जेष्यामि" इति प्रतिज्ञातवान् ।

तस्य वचनं श्रुत्वा भीष्मस्य मनसि जुगुप्सा उत्पन्ना । अतः सः - "कर्ण ! बुद्धिहीनः इव किमपि मा रटतु । अर्जुनस्य पराक्रमं, कृष्णस्य सामर्थ्यं च ज्ञात्वा अपि भवान् एतादृशानि आडम्बरवचनानि वदति ! एतत् अनुचितम्" इति उक्तवान् ।

भीष्मस्य वचनेन अपमानितः कर्णः कोपेन - "कृष्णः महान् एव स्यात् नाम । परम् अहं मम निन्दनं न सहे । अतः अहम् इदानीमेव शस्त्रसंन्यासं करिष्यामि । यावत् भीष्मः युद्धरङ्गे भविष्यति तावत् अहं शस्त्रग्रहणं न करिष्यामि" इति उक्त्वा सभातः निर्गतवान् एव ।

तदा भीष्मः तम् उपहसन् दुर्योधनं प्रति उक्तवान् - "यः एकाकी शत्रून् जेतुं समर्थः



आसीत् सः शस्त्रसंन्यासं कृत्वा गतवान् एव खलु ! अधुना कः वा युद्धस्य भारं वहति ? एतादृशः यदि 'अहम् एकः एव शत्रून् जेष्यामि' इति प्रतिज्ञां करोति तर्हि कः वा तस्मिन् विश्वसिति ? अपि च अत्र उपस्थितानां जयद्रथ-बाह्लीकप्रभृतीनां महारथिनां पुरतः तथा विकत्थनं न युक्तं खलु ? 'अहं ब्राह्मणः' इति असत्यम् उक्त्वा परशुरामात् यदा सः विद्याम् अधीतवान् तदा एव सः अधर्मभाक् अभवत्" इति ।

भीष्मस्य वचनं श्रुत्वा रुष्टः दुर्योधनः - "पितामह ! पाण्डवाः अस्मत्सदृशाः एव, न तु देवताः । अस्त्रविद्यायाः, युद्धकौशलस्य च ज्ञानं तेषां यावत् अस्ति तावत् एव अस्माकम् अपि अस्ति । तथा सति कथं पाण्डवाः एव जेष्यन्ति इति उक्तवान्

भवान् ? भवत्सु कमपि अवलम्ब्य अहं युद्धार्थं प्रवृत्तः नास्मि'' इति उक्तवान् ।

दुर्योधनस्य एतादृशीं युद्धासक्तिं दृष्ट्वा तत्रैव उपविष्टः विदुरः तम् एकां कथाम् उक्तवान् - ''कदाचित् कश्चित् व्याधः एकं जालं प्रसारितवान् । तस्मिन् जाले द्वौ पक्षिणौ बद्धौ अभवताम् । किन्तु तौ न भीतौ । उभौ अपि मिलित्वा जालेन सह आकाशे उड्डयनं कृतवन्तौ । तत् दृष्ट्वा व्याधः तौ पक्षिणौ अनुसृत्य भूमौ धावन् आसीत् । तदा कश्चित् मुनिः तम् उद्दिश्य - 'भोः, आकाशे डयमानयोः पक्षिणोः भूमौ अनुसरणेन कः लाभः ?' इति पृष्टवान् । तदा व्याधः उक्तवान् - 'स्वामिन्, यावत्पर्यन्तम् एतौ पक्षिणौ परस्परं कलहम् अकृत्वा डयेते तावत् मम प्रयत्नः व्यर्थः एव । परं यदा तौ परस्परं कलहं कुरुतः तदा मम लाभः भविष्यति' इति । व्याधस्य चिन्तनानुसारम् अन्ते तौ पक्षिणौ परस्परं कलहं कृत्वा जालेन सह पतितवन्तौ । व्याधः तौ पक्षिणौ, जालं च गृहीत्वा आनन्देन ततः गतवान्'' इति ।

एवं कथाम् उक्त्वा विदुरः दुर्योधनम् उद्दिश्य - ''वत्स ! दायादाः यदा सम्पत्तेः निमित्तं परस्परं कलहं कुर्वन्ति तदा सर्वनाशः भविष्यति इत्यत्र नास्ति सन्देहलेशः । अन्या अपि काचित् घटना अधुना मम स्मृतिपथम् आगता अस्ति । वदामि, शृणोतु तावत् ।

पूर्वं कदाचित् वयं कैश्चित् व्याधैः सह गन्धमादनपर्वतं गतवन्तः आस्म । तत्र एकस्मिन् भयानके खाते एकः मधुमक्षिकाकोषः आसीत् । तस्य मधुनः पानेन वार्धकं, मरणं च अपगतं भविष्यति, अन्धाः नेत्रे प्राप्नुवन्ति इत्यादिरूपेण तत्रत्याः निवासिनः उक्तवन्तः । तेषां वचनं श्रुत्वा अस्माभिः सह आगताः व्याधाः निवारिताः सन्तोऽपि मधुनः आशया क्रूरप्राणिभिः, घोरसर्पैः च युक्तं तं खातं प्रविश्य मृतवन्तः । ते केवलं मधुनः प्राप्तिम् एव चिन्तितवन्तः । तस्य प्राप्तौ कीदृशाः क्लेशाः अपायाः च सम्भवन्ति इति ते न चिन्तितवन्तः एव । तथैव अग्रे राज्यार्थं पाण्डवैः सह करिष्यमाणं युद्धम् अपि एतादृशं विवेचनारहितं कार्यं भविष्यति'' इति उक्तवान् । - *(अनुवर्तते)*



# वार्ताविशेषाः

## समुद्रे निमग्नां द्वारकाम् अधिकृत्य......

पुराणकथातः ज्ञायते यत् द्वारकानगरं श्रीकृष्णेन प्रतिष्ठापितम् इति । श्रीकृष्णस्य निर्वाणस्य अनन्तरं द्वारका जले निमग्ना अभवत् ।

डा॰ आर्. एस्. राव्वर्यः, यश्च 'इण्डियन् मरिन् आर्कियालजी' संस्थायाः प्रमुखः अस्ति, सः उत्खननस्य आधारेण सुदीर्घं संशोधनं कृतवान् अस्ति । सः वदति - ''कुशस्थल्याः अवशेषाणाम् उपरि श्रीकृष्णः द्वारकां निर्मितवान् आसीत् । कुशस्थली कश्चन द्वीपः । कृष्णेन ३७०० वर्षेभ्यः पूर्वं तत्र द्वारका निर्मिता । निर्माणानन्तरं शतवर्षाभ्यन्तरे समुद्रेण सा आक्रान्ता । निमज्जनस्य सप्ताहात् पूर्वं श्रीकृष्णः तत्रत्यान् अन्यत्र नीत्वा तां




रिक्तीकृतवान् आसीत् ।'' डा॰ राव्वर्यः अभिप्रैति यत् इदानीं 'रिक्लमेषन्' तन्त्रज्ञानं यत् उपयुज्यते तदेव उपयुज्य श्रीकृष्णः द्वारकां निर्मितवान् आसीत् इति ।

द्वारकायां यत् उत्खननं प्रवर्तमानम् आसीत् तदिदानीं स्थगितम् अस्ति । बि.बि.सि.संस्था अचिरात् एव एतस्याः योजनायाः अनुवर्तनार्थं साहाय्यं करिष्यति इति श्रूयते ।

## सञ्चारी महावृद्धः

जोर्डन्देशीयः चरीरनामकः १२८ वर्षीयः वृद्धः स्वस्य अन्तिमदिनपर्यन्तम् अपि सञ्चाररतः आसीत् ।

स्वस्य तारुण्ये सः अश्वधावनस्पर्धायाम् उष्ट्रधावन-स्पर्धायां च निरतः भवति स्म सदापि । तादृशेषु कार्येषु जोर्डान्संस्थापकः राजा अब्दुल्लः तस्य सहचरः भवति स्म ।

मधुरखाद्यानि, महार्घपदार्थाः च तस्य प्रियः आहारः



आसीत् । सः बहुधा उपवासम् अपि करोति स्म । तस्य १२८ पौत्रप्रपौत्रादयः सन्ति ।

## अत्युन्नताः जीविनः

'एतत् निश्चयेन आश्चर्यकरम् । पृथिव्यां जातेषु जन्तुषु अयम् एव अतिमहान् इत्यत्र नास्ति सन्देहः' इति वदति ओक्लाहामाविश्वविद्यालयस्य प्रमुखः रिचर्ड् सिफोली । ओक्लाहामाप्रदशस्य उत्तरपूर्वीयभागे 'डिनोसार्' नामकानां जीविनाम् अवशेषस्य अन्वेषणार्थं नियुक्तस्य गणस्य प्रमुखः अस्ति सः । सः अभिप्रैति ''यदा ते 'डिनोसार्'जीविनः जीवन्ति स्म तदा तेषां भारः ६०टन्मितः, औन्नत्यं च ६० पादमितं स्थितं स्यात् । औन्नत्येन अद्वितीयाः आसन् ते । भूमौ स्थित्वा



यस्यकस्यचित् अपि भवनस्य षष्ठे अट्टे मुखं प्रसारयितुं शक्नुवन्ति स्म ते'' इति । ते तेन 'सौरोपोसिडन्' नाम्ना निर्दिष्टाः सन्ति । तस्य पदस्य अर्थः - 'सञ्चारसमये भूमिम् एव उत्पीडितवत्यः दैत्यगोधिकाः' इति ।

चन्दमामायाः
अनुबन्धः - ११३



अस्माकं देशस्य
सौन्दर्यस्थानानि

# कोजिरङ्गराष्ट्रियोद्यानम्



प्रसिद्धानाम् एकश्रृङ्गाणां खड्गमृगाणां वासस्थानम् अस्ति काजिरङ्गा राष्ट्रियोद्यानम् (नेशनल् पार्क्) । एतत् अस्माकं देशस्य ईशान्यभागे अस्सांराज्यस्य ब्रह्मपुत्रस्य खाते कर्पीलाङ्गनामकस्य पर्वतस्य उपत्यकायां ४३० च. कि.मी. विशाले भूप्रदेशे अस्ति ।

पूर्वम् उत्तरभारतस्य सर्वेषु प्रदेशेषु एते खड्गमृगाः वसन्ति स्म । परन्तु गच्छति काले तेषां संख्या न्यूना जाता । क्रि.श. १९०८तमे वर्षे केवलं १२ संख्याकाः खड्गमृगाः आसन् । अतः विनाशपथे गच्छतां मृगाणां संरक्षणार्थं २९२६तमे वर्षे एतस्य उद्यानस्य निर्माणं जातम् । अधुना अत्र १६०० खड्गमृगाः सन्ति ।

अस्माकं देशस्य खड्गमृगाणाम् औन्नत्यं ५.५० पादपरिमितं भवति । तेषां भारः १८०० किलोग्रांपरिमितः भवति । आफ्रिकादेशे महाखड्गमृगाः सन्ति । सुमात्रादेशे लघुतमाः खड्गमृगाः सन्ति । सुमात्रादेशस्य खड्गमृगाणाम् औन्नत्यं ४.५ पादपरिमितं भवति । भारः तु १००० किलोग्रांमितं भवति । जावादेशस्य खड्गमृगाः विरलजातीयाः सन्ति ।

कोजिरङ्गवन्यमृगसंरक्षणालयः कच्छभूम्या युक्तः अस्ति । वृतयः, विविधजातीयाः अनेके फलवृक्षाः च तत्र सन्ति । प्रकृतिसौन्दर्येण रमणीयः एषः वन्यमृगरक्षणालयः देशे एव 'महत् पर्वतारोहणकेन्द्रम्' इत्यपि प्रसिद्धिं गतः अस्ति ।

# पुरूरवाः

अनेकानि यागयज्ञादीनि कृत्वा देवताः तोषितवान् पुरूरवाः कश्चित् महान् राजा आसीत् । सः तदा तदा देवलोकम् अपि गत्वा आगच्छति स्म । कदाचित् प्रयाणकाले तेन कस्याश्चित् स्त्रियाः आर्तनादः श्रुतः । केशी नाम कश्चित् राक्षसः ऊर्वशी-चित्रलेखानामनी द्वे देवकन्ये बलात् अपहृत्य नयन् आसीत् । पुरूरवाः तं राक्षसं जित्वा ते देवकन्ये सुरक्षिततया स्वर्गं प्रापितवान् ।

कानिचन दिनानि अतीतानि । कस्यचित् ऋषेः शापस्य कारणात् ऊर्वशी भूलोके नरजन्म प्राप्तवती । सा भूलोके पुरूरवसम् इष्टवती । ऊर्वश्याः असदृशं सौन्दर्यं दृष्ट्वा पुरूरवाः अपि आकृष्टः अभवत् । ''अहं भवतीं परिणेतुम् इच्छामि'' इति पुरूरवाः स्वेच्छां प्रकटितवान् । तस्य वचनं श्रुत्वा ऊर्वशी निर्बन्धसहितं परिणयम् अङ्गीकृतवती । तस्याः प्रधानः निर्बन्धः आसीत् यत् ''मम समीपे एकं हरिणयुगलम् अस्ति । यावत् तत् सुरक्षिततया स्थास्यति तावत् अहं भवता सह जीवनं करिष्यामि'' इति । पुरूरवाः एतत् अङ्गीकृतवान् ।

तौ द्वौ अपि कञ्चित् कालं यावत् गार्हस्थ्य-जीवनं कृतवन्तौ । ऊर्वश्याः शापविमोचन-कालः सन्निहितः । स्वर्गे तस्याः अभावेन नीरसताम् अनुभवन् इन्द्रः तस्याः शोधनार्थं गन्धर्वान् प्रेषितवान् । एकस्यां रात्रौ महती वृष्टिः आसीत् । तदा गन्धर्वाः आगत्य हरिणद्वयमपि चोरयित्वा नीतवन्तः । निद्रातः अकस्मात् जागरितः पुरूरवाः तं विषयं ज्ञात्वा अनुक्षणं तान् अनुसृतवान् । किन्तु तान् ग्रहीतुं सः न शक्तः । एवं नियमभङ्गः जातः इत्यतः ऊर्वशी अनुक्षणं पुरूरवसं परित्यज्य स्वर्गं गतवती ।

ऊर्वश्याः वियोगं सोढुम् अशक्तः पुरूरवाः उन्मत्तः इव अभवत् । तस्य तादृशीं स्थितिं दृष्ट्वा उत्पन्नकरुणाः देवताः वर्षे एकवारं कुरुक्षेत्रे तयोः मेलनार्थं व्यवस्थां कृतवन्तः । तेन पुरूरवसः जीवने पुनः चैतन्यं दृष्टम् ।

ऊर्वशीपुरूरवसोः कथायां बहु रहस्यानि सन्ति इति पौराणिकाः वदन्ति । एताम् आधारीकृत्य अनेके कवयः काव्यानि नाटकानि च रचितवन्तः सन्ति ।



# भवन्तः जानन्ति किम् ?

## कोसक्स्



सहस्रशः वर्षेभ्यः पूर्वम् एष्या-खण्डस्य विशालप्रदेशेभ्यः शाद्वलेभ्यः, पर्वतप्रदेशेभ्यः च विभिन्नजातीयाः विभिन्न-वंशोत्पन्नाः जनाः रष्यादेशं प्रति आगताः । तथा आगतेषु कोसक्स्वंशीयाः कृष्णसमुद्रस्य समीपे अजोव्समुद्रेण मिलन्त्याः डान्नद्याः तीरे उषितवन्तः । उत्तमशरीररचनया युक्तायाः एकस्याः जातेः अश्वानां पोषणे एते कोसक्स्जनाः बहु निपुणाः । अश्वचालने अद्वितीयाः इति प्रसिद्धिं गताः एते अद्यापि स्वस्य अपूर्वेण अश्वचालनप्रदर्शनेन जनान् रञ्जयन्ति । सङ्गीतवृन्देन सह विश्वे सर्वत्र सञ्चारं कृत्वा सङ्गीतकार्यक्रमान् कृत्वा अपि प्रसिद्धिं गताः सन्ति एते ।

# इन्द्रधनुः

## कल्पवृक्षायते निम्बः

वृक्षशास्त्रे निम्बपर्णानां नाम 'मीलिया अजाडिराच्या' इति । अस्माकं देशे विशेषतया दक्षिणभारते साम्प्रदायिककारणेन बहुषु सन्दर्भेषु निम्बपर्णस्य उपयोगः परम्परया क्रियमाणः अस्ति । दुष्टशक्तिं दूरीकर्तुं निम्बपर्णानां सामर्थ्यम् अस्ति इति अस्माकं पूर्वजानां विश्वासः । तेषां विश्वासः यथार्थः अस्ति इति एषः विषयः आधुनिकविज्ञानस्य संशोधनैः दृढीकृतः अस्ति । रोगप्रसारकाणां क्रिमिकीटानां नाशने निम्बपर्णस्य गन्धस्य, रसस्य च सामर्थ्यम् अस्ति इति श्रूयते । निम्बवृक्षस्य सर्वेषु अवयवेषु अपि औषधीयगुणाः सन्ति । निम्बवृक्षस्य त्वचा निर्मितं कषायं वैद्याः प्राचीनज्वरस्य औषधरूपेण यच्छन्ति । गर्भिणी यदि निम्बस्य किसलयं भक्षयति तर्हि शिशोः, मातुः च रोगनिरोधशक्तिः वर्धते इति श्रूयते । एवं निम्बवृक्षः अपूर्वैः औषधीयगुणैः युक्तः सन् कल्पतरुः इव एव अस्ति ।



# प्रथमः स्वातन्त्र्यसङ्ग्रामः



*(ईस्ट-इण्डियासंस्थायाः विरुद्धम् आरब्धः विद्रोहः देशे सर्वत्र व्याप्तः अभवत् । यद्यपि सैनिकैः विद्रोहस्य आरम्भः कृतः, तथापि तस्य अनुवर्तनं स्थानीयाः राजानः, प्रमुखाः, सामान्यजनाः च कृतवन्तः । नानासाहेबः झान्सीराज्ञी लक्ष्मीबायी च एतस्य नायकत्वं निरूढवन्तौ । झान्सिदुर्गम् आक्रान्तवन्तः ब्रिटिष्सैनिकाः एकत्र युद्धं कुर्वन्तः एव अपरत्रापि गत्वा ततः शस्त्रास्त्राणां सङ्ग्रहालयं स्फोटितवन्तः । तदनन्तरम्.....)*

सर् हाग्रोसस्य नेतृत्वे ब्रिटिष्सैनिकाः झान्सिदुर्गस्य पूर्वभागे विद्यमानं शस्त्रास्त्रसङ्ग्रहालयं स्फोटयित्वा दग्धवन्तः । तथापि ततः भीतिम् अप्राप्य झान्सि-सैनिकाः, सामान्याः महिलाः, पुरुषाः च वीरावेशेन ब्रिटिष्सेनां सम्मुखीकृतवन्तः, युद्धम् अनुवर्तितवन्तः च ।

दुर्गम् आरोढुं प्रयत्नं कृतवन्तः चतुरः अधिकारिणः ते मारितवन्तः । दुर्गस्य बहिर्भागे स्थितात् कूपात् दुर्गं प्रति पानजलम् अनीयते स्म । ब्रिटिष्सैनिकाः तं कूपं गोलकास्त्रेण स्फोटितवन्तः । दुर्गस्य अन्तः विद्यमानः कूपः पूर्वमेव शुष्कः जातः आसीत् ।

प्रासादस्य अन्तः एकस्मिन् विशाले प्रकोष्ठे गङ्गाजलेन पूर्णाः घटाः केचन आसन् । अन्ते अनन्यगतिकतया तं प्रकोष्ठम् उद्घाट्य लक्ष्मीबायी सर्वान्

उद्दिश्य - ''अनेन पवित्रेण जलेन अस्माकं दाहस्य निवारणं करिष्यामः । युद्धे मरणं प्राप्यते चेदपि सद्गतिः एव प्राप्यते अस्माभिः'' इति उक्तवती ।

दुर्गस्य भित्तिम् आरोढुं प्रयत्नं कृत्वा यदा चत्वारः अधिकारिणः मृताः तदा ब्रिटिष्सेना अनिवार्यतया तं प्रयत्नं परित्यक्तवती ।



अनन्तरदिने रात्रौ ब्रिटिष्सेनाशिबिरे तत्कालिकपरिस्थितेः विषये महती चर्चा आरब्धा । स्वसहायकानाम् अधिकारिणां सर्वेषाम् अभिप्रायं श्रुत्वा अन्ते हाग्रोसः एवम् उक्तवान् - ''अधुना एव अस्माकं सैन्यस्य समर्थाः सैनिकाः बहवः मृताः सन्ति । लघुझान्सिराज्यस्य जनाः एव अस्माकम् एतावन्तः सैनिकान् मारितवन्तः । एवं चेत् देशे अन्यप्रदेशेषु अपि आरब्धं विद्रोहं शमयितुं वयं कथं शक्नुयाम ? झान्सिराज्ये अस्माकं जयापजयम् अवलम्ब्य एव अस्माकं संस्थायाः भविष्यनिर्णयः भविष्यति । अतः श्वः एव अस्माभिः दुर्गस्य प्रवेशः करणीयः । ततोऽपि प्रमुखः विचारः नाम राज्ञ्याः बन्धनम् । सा जीवसहितं ग्रहीतव्या अस्माभिः । सः एव अस्माकं महान् जयः । भवन्तः अन्यान् सर्वान् निर्दयं मारयितुम् अर्हन्ति । किन्तु राज्ञी तु सजीवम् एव ग्रहीतव्या । तस्याः व्रणाः भवन्ति चेत् चिन्ता नास्ति । किन्तु तस्याः मरणं न भवेत् । तस्याः मुखात् अस्माभिः क्षमायाचनं कारणीयम् । सा प्राणभिक्षां यथा याचेत् तथा करणीयम् अस्माभिः । तदा अन्ये स्थानीयाः राजानः उत्तमं पाठं पठिष्यन्ति । ये तां जीवसहितां गृहीत्वा अस्मभ्यं समर्पयन्ति तेभ्यः विशिष्टं पारितोषिकं दद्मः । एतत् युद्धं जयापजयनिर्णायकम् इत्यतः श्वः युद्धकरणसमये केनापि न्यायान्यायादिकं द्रष्टव्यं नास्ति । कथम् अपि जयः प्राप्तव्यः इत्येव अस्माकम् उद्देशः । सर्वे स्मरन्तु एतत्'' इति ।

एवं ब्रिटिष्सेनायां यदा चर्चा प्रचलन्ती आसीत् तदा दुर्गस्य अन्तः केचन प्रमुखाः राज्ञीं द्रष्टुं गतवन्तः ।

तदा राज्ञी व्रणितानां सैनिकानां चिकित्सां कुर्वती आसीत् । गताः सर्वे प्रमुखाः राज्ञीं नमस्कृत्य उक्तवन्तः - ''देवि ! अस्माभिः अधुना किञ्चिदपि



विलम्बः न करणीयः । श्वः शत्रवः निश्चयेन दुर्गस्य प्रवेशं करिष्यन्ति । शस्त्रास्त्रैः विना तेषां सम्मुखीकरणं कष्टकरम् एव । दुर्गे शस्त्रास्त्रसङ्ग्रहः कियान् अस्ति इति भवती जानाति एव । आहारसङ्ग्रहस्थितिः अपि भवत्या अविदिता तु न । यद्यपि सैनिकाः जनाः च युद्धे धैर्येण भागं तु गृह्णन्तः सन्ति, तथापि सर्वेषां मनस्सु 'पराजयः निश्चितः' इति भावः गाढः जायमानः अस्ति । एतादृशस्थितौ देशहितम् आदौ चिन्तनीयं, न तु स्वाभिमानरक्षणमात्रम् । अस्माकं देशे अन्येन केनापि राज्ञा, राज्ञ्या वा अकृतं साहसं भवती कृतवती अस्ति । भवती शत्रूणां वशा न भवेत् इति अस्माकम् इच्छा'' इति ।

''मातृभूमेः रक्षणार्थं वीरमरणं प्राप्य अहं कीर्तिशालिनी भविष्यामि इति भवताम् असूया भवति वा ?'' इति विनोदेन पृष्टवती लक्ष्मीबायी ।

''मातः ! अस्माकं वचने यदि दोषः स्यात् तर्हि वयं क्षन्तव्याः इति आदौ प्रार्थयामः । इतः पूर्वम् अस्माकं देशे बहवः वीरपुरुषाः महिलाः च जन्म प्राप्तवन्तः स्युः । परं भवादृशी वीरवनिता पुनः जनिष्यते इति वयं न भावयामः । भवत्याः मरणभयं किञ्चिदपि नास्ति इति वयं जानीमः । किन्तु ते नीचाः भवतीं सजीवां बन्धुं योजनां कुर्वन्तः सन्ति इति वार्ता श्रूयते'' इति कश्चित् वृद्धः उक्तवान् ।

तस्य वचनं श्रुत्वा तस्य भावम् अवगच्छन्ती राज्ञी किञ्चित्कालं यावत् शिरः अवनमय्य नेत्रे निमील्य चिन्तनं कृतवती । पश्चात् नेत्रोद्घाटनं कृत्वा - ''भवताम् अभिप्रायः अपि युक्तः एव अस्ति । इदानीं मया इतः पलायनं करणीयम् इति खलु भवताम् आशयः ? तत् पलायनं मम प्राणरक्षणार्थं न, अपि तु सङ्ग्रामस्य अनुवर्तनाय इति अहम् अवगच्छामि । इतः पलायनं कृत्वा आत्मा रक्षितः चेत् अन्य-राज्यानां सम्पर्कं कृत्वा कथमपि सैन्यबलस्य वर्धनं कर्तुं शक्यते'' इति उक्तवती ।

''नानासाहेबः तात्याटोपी इत्यादयः समये यदि अत्र उपस्थिताः अभविष्यन् तर्हि अस्माकं स्थितिः एतावती गभीरा न अभविष्यत् । अस्माभिः अन्तिमश्वास-पर्यन्तं युद्धं कृत्वा देशस्य रक्षणं करणीयम्

अस्ति । नास्ति अन्यः उपायः'' इति उक्तवन्तः सर्वे ।

अनुक्षणमेव राज्ञ्याः पलायनार्थं अपेक्षिताः सर्वाः सज्जताः कृताः । गूढचाराः गत्वा दुर्गं परितः ब्रिटिष्सैनिकाः कुत्रापि न सन्ति इति निश्चयं कृत्वा आगतवन्तः ।

राज्ञी दत्तकपुत्रं दामोदरं स्वस्य पृष्ठे बद्धवती । पश्चात् द्वाभ्यां सेवकाभ्यां, कैश्चित् अङ्गरक्षकैः च सह अन्धकारे दुर्गात् प्रस्थितवती ।

अहो कीदृशी दुर्दशा ! वाणिज्यार्थं कुतश्चित् भारतम् आगतानां जनानां कुटिलताकारणेन राज्ञ्या एतादृशे मध्यरात्रसमये स्वदुर्गं परित्यज्य गन्तव्यम् अभवत् !!



योजनानुसारं अनन्तरदिने प्रातःकाले एव ब्रिटिष्सेना झान्सिदुर्गम् आक्रान्तवती । दुर्गस्य अन्तः विद्यमानाः प्राणभीतिं परित्यज्य युद्धं कृतवन्तः । तेषां तादृशं धैर्यं दृष्ट्वा शत्रवः अपि आश्चर्यचकिताः अभवन् । कश्चित् युवकः अकस्मात् दुर्गस्य उपरिष्टात् ब्रिटिष्दलपतेः उपरि कूर्दितवान् । अनुक्षणं दलपतेः शिरः खड्गेन कर्तितवान् । किन्तु अपरस्मिन् क्षणे एव सः युवकः ब्रिटिष्सैनिकस्य गोलकास्त्रेण मारितः एव ।

पश्चात् केचन ब्रिटिष्युवकाः दुर्गभित्तिम् आरुह्य अन्तः अवतीर्य दुर्गस्य द्वारम् उद्घाटितवन्तः । ततः ब्रिटिष्सेना अन्तः प्रविष्टवती ।

भुषुण्डेः प्रहारेण व्रणिता काचित् महिला धावन्ती आगत्य शत्रुसैनिकानाम् उपरि निष्ठीवनं कृतवती । तदा तामपि सैनिकाः निर्दयं मारितवन्तः ।

अशीतिवर्षीयं वृद्धं कञ्चित् मारयितुं कश्चित् ब्रिटिष्सैनिकः भुषुण्डीम् उन्नीतवान् । किन्तु तावति काले सः वृद्धः तस्य सैनिकस्य उपरि पतित्वा तं मारितवान् ।

एवं दुर्गे विद्यमानाः सर्वे स्त्रीपुरुषभेदेन विना आयुधेषु असत्सु अपि यत् प्राप्तं तत् स्वीकृत्य शत्रूणाम् उपरि आक्रमणम् आरब्धवन्तः । किन्तु अनतिकाले एव तेषु अनेके मारिताः । केचन शत्रुसैनिकैः बद्धाः । तथा बद्धान् ब्रिटिष्-अधिकारिणः बहुधा हिंसित्वा ''भवतां राज्ञी कुत्र गतवती अस्ति ? वदन्तु'' इति पीडितवन्तः ।

तदा ते कोपेन - ''भवतां सर्वेषां

निखननार्थं गर्तान् कारयितुं गतवती अस्ति'' इति उक्तवन्तः ।

तेषाम् उत्तरेण कुपिताः ब्रिटिष्सैनिकाः तान् सर्वान् निर्दयं मारितवन्तः । तथापि ते तृप्ताः न अभवन् । यतः ते राज्ञ्याः विषयं किमपि न ज्ञातवन्तः । पश्चात् ते दुर्गस्य प्रतिकोणम् अन्वेषणं कृतवन्तः राज्ञ्याः निमित्तम् । केचन धान्यानां कुसूले अन्विष्टवन्तः । अन्यः कश्चित् कश्चित् जीर्णं जलरहितं कूपं अवतीर्णवान् राज्ञ्याः शोधनार्थम् । तेन राज्ञी तु न प्राप्ता, किन्तु सर्पेण दष्टः सः तत्रैव मृतः अभवत् ।

राज्ञी न लब्धा इति कारणेन नगरस्य सामान्यानां जनानां मारणम् आरब्धवन्तः ब्रिटिष्सैनिकाः । ते वृद्धान्, बालान् अपि न परित्यक्तवन्तः । गृहे विद्यमानं सर्वं लुण्ठित्वा गृहाणि दग्धवन्तः ते । एवं समग्रं नगरम् अग्निसात् जातम् ।

झान्सीदुर्गात् किञ्चिद्दूरे निर्जनप्रदेशे एकस्मिन् भवने बोकर्नामकः कश्चित् ब्रिटिष्दलपतिः कैश्चित् सैनिकैः सह वासं कुर्वन् आसीत् । रात्रौ अन्धकारे तेन एव मार्गेण लक्ष्मीबायी प्रयाणं कुर्वती आसीत् । अश्वस्य खुरध्वनिं श्रुत्वा बहिः आगत्य सः अश्वम् आरुह्य वेगेन गच्छन्तीं राज्ञीं दृष्टवान् । किन्तु अन्धकारे सः तां न अभिज्ञातवान् । तथापि राज्ञी एव गच्छन्ती स्यात् इति तस्मिन् सन्देहः उत्पन्नः । ''राज्ञीं सजीवां बद्ध्वा ये आनयन्ति तेभ्यः विशिष्टं पारितोषिकं दीयते'' इति हाग्रोसस्य उद्घोषणं सः स्मृतवान् । अतः सः अनुक्षणम् अश्वम् आरुह्य सैनिकान् - 'माम् अनुसरन्तु' इति आज्ञाप्य राज्ञ्याः अश्वम् उपसृत्य ''तिष्ठतु'' इति उच्चैः उक्तवान् ।

राज्ञी अनुक्षणं स्वस्य अश्वं परावृत्य बोकरस्य उपरि आक्रमणं कृतवती । वामहस्तेन अश्वस्य खलीनं गृहीत्वा दक्षिणेन हस्तेन कोषात् खड्गम् आकृष्य सा बोकरम् एकेन एव प्रहारेण अधः पातितवती । बोकरः 'हन्तः ! हा हतोऽस्मि' इति भीकरतया क्रन्दन् अधः पतितवान् । राज्ञी पुनश्च अश्वं परावृत्य अतिशयेन वेगेन अग्रे प्रयाणं कृतवती ।

बोकरस्य पृष्ठतः आगताः सैनिकाः रक्तप्रवाहे पतितं स्वनायकम् उन्नीय उपवेशितवन्तः ।





# विवेकी

प्राचीनकाले कोसलदेशे सुमन्त्रः नाम राजा राज्यपरिपालनं करोति स्म । सः शरीरेण मनसा च दुर्बलः आसीत् । सुमन्त्रस्य पूर्वजाः अत्यन्तं शक्तिशालिनः आसन् । ते अपूर्वाः शक्तीः सम्पाद्य तासां साहाय्येन उत्तमरीत्या प्रजाः पालितवन्तः आसन् । सुमन्त्रस्य पिता मरणसमये सुमन्त्रं तासां शक्तीनां विषयम् उक्त्वा - ''एतेषां साहाय्येन सम्यक् राज्यं पालयतु'' इति बोधितवान् आसीत् । किन्तु दुर्बलः सुमन्त्रः कदापि तासां शक्तीनाम् उपयोगं न कृतवान् ।

यदा मरणकालः सन्निहितः तदा सुमन्त्रः स्वपुत्रौ आहूय - ''पुत्रौ ! अहम् अत्यन्तं दुर्बलः आसम् इति कारणेन उत्तमरीत्या राज्यपरिपालनं कर्तुं न शक्तः । अतः मम जीवने अहं कीर्तिम् अपि न सम्पादितवान् । यद्यपि पूर्वजैः सम्पादिताः अपूर्वाः शक्तयः आसन्, तथापि अहं तासाम् उपयोगं न कृतवान् । अतः भवन्तौ वा तासाम् उपयोगं कृत्वा सम्यक् राज्यपरिपालनं कृत्वा यशोमन्तौ भवताम् इति मम इच्छा । राज्यस्य उत्तरस्यां दिशि योजनदूरे गहनारण्ये रक्तपर्वताः सन्ति । तेषां पर्वतानां पूर्वभागे अस्माकं कुलदेवतायाः कालिकायाः मन्दिरम् अस्ति इति भवन्तौ जानीतः एव । तस्मिन् मन्दिरे गर्भगृहे देव्याः पादस्य समीपे कुङ्कुमपात्रसदृशं लघु कीलकम् अस्ति । यदि तस्य नोदनं क्रियते तर्हि अन्तर्गृहं गन्तुं कश्चन मार्गः दृश्यते । तस्मिन् अन्तर्गृहे परमान्नदं कांस्यपात्रं, मन्त्रिताः अक्षताः च सन्ति । अक्षताः आनीय कालिकादेवीं स्मृत्वा यदि भूमौ क्षिप्यते तर्हि सहस्रशः सैनिकाः उत्पद्यन्ते । तस्य सैन्यस्य साहाय्येन अन्यानि राज्यानि जित्वा राज्यं विस्तारयितुं शक्यते । अक्षय्यपात्रस्य साहाय्येन प्रजाः बुभुक्षया



यथा पीडिताः न स्युः तथा सुखेन परिपालनं क्रियताम् । यदि कदापि क्षामः अनावृष्टिः इत्यादिकं भवेत् तर्हि भवतोः अन्यतरः शुचिर्भूतः सन् कालिकादेव्याः उपासनं कृत्वा, तस्याः हस्ते विद्यमानं खड्गं राज्यं प्रति यदि आनयेत् तर्हि खड्गस्य महिम्ना वृष्टिः भविष्यति । किन्तु एकः विषयः स्मरणीयः यत् अक्षतानां साहाय्येन ये सैनिकाः उत्पद्यन्ते तेषाम् आहारे कदापि न्यूनता न भवेत् । आहारः किञ्चित् न्यूनः भवति चेदपि ते पुनश्च अक्षतरूपेण परिवृत्ताः भविष्यन्ति'' इति उक्तवान् ।

सुमन्त्रस्य मरणानन्तरं ज्येष्ठः पुत्रः सुकेशः राजा अभवत् । केषाञ्चित् दिनानाम् अनन्तरं कदाचित् अनावृष्टिकारणेन राज्ये धान्यवर्धनम् एव न अभवत् । बहुजनाः आहारस्य अभावतः मरणं प्राप्तवन्तः । तस्मिन् एव काले दुर्भिक्षदेवता अपि राज्यं प्रविष्टवती इति कारणेन वृष्टिः सर्वथा न आगता एव अनन्तरकाले । दुर्भिक्षदेवतायाः आगमनेन जनजीवनम् इतोऽपि दुस्तरम् अभवत् ।

वृद्धाः मन्त्रिणः सम्भूय राजानं सुकेशं निवेदितवन्तः - ''प्रभो ! कृपया कालिका-मन्दिरं गत्वा भवान् देव्याः खड्गम् आनयतु । तेन राज्ये वृष्टिः भविष्यति । वृष्टिः भविष्यति चेत् दुर्भिक्षदेवता अपि पलायनं करिष्यति । प्रजाः च सुखेन जीवितुं शक्ताः भविष्यन्ति'' इति ।

तेषां वचनम् अङ्गीकृत्य सुकेशः यदा गमनाय सज्जतां कुर्वन् आसीत् तदा तस्य अनुजः सुकीर्तिः - ''अहम् अपि भवता सह आगच्छामि'' इति उक्तवान् ।

तदा सुकेशः तस्य उपेक्षां कुर्वन् - ''अहम् अश्वारोहणं जानामि । तत्र गमनस्य मार्गम् अपि जानामि । मया सह शतं सैनिकाः अपि आगमिष्यन्ति । अतः भवतः आवश्यकता नास्ति मम'' इति उक्त्वा ततः प्रस्थितवान् ।

यदा सः वनस्य क्रमणं कुर्वन् आसीत् तदा चक्रवातवत् दुर्भिक्षदेवता तत्र उपस्थाय तान् अवरुद्धवती । तस्याः वेगस्य कारणेन वृक्षाः सर्वे कम्पन्ते स्म । अनुक्षणं सैनिकाः स्वहस्तेषु विद्यमानानि आयुधानि, बाणान् च तस्याः उपरि क्षिप्तवन्तः । किन्तु ततः कोऽपि परिणामः न जातः ।

तैः प्रयुक्तानि आयुधानि बाणान् च निवारयन्ती दुर्भिक्षदेवता - ''कालिका-

देव्याः खड्गस्य आनयनेन विना वृष्टिः न भविष्यति । यावत् वृष्टिः न भविष्यति तावत् अहं सुखेन अत्र जीवितुं शक्नोमि । अतः कालिकामन्दिरं प्रति प्रस्थितान् भवतः सर्वान् अहम् अग्रे गन्तुं न त्यक्ष्यामि'' इति वदन्ती 'उफ्' इति मुखेन वायुं ध्मात्वा झञ्झावातं सृष्टवती । तेन झञ्झावातेन राजा सैनिकाः च शुष्कपर्णवत् उड्डीय राजधान्याः सीमायां पतितवन्तः । पुनः अग्रे गमनाय तान् न त्यक्तवती एव सा दुर्भिक्षदेवता ।

एतत् ज्ञातवान् सुकीर्तिः 'एतादृशविषये साहसेन किमपि न प्रयोजनम् । महत् सैन्यादिबलम् अत्र उपकारकं न भवति । उपायेन जागरूकतया व्यवहारः कृतः चेत् कार्यं साधयितुं शक्येत' इति विचिन्त्य अनन्तरदिने एकाकी एव कालिकामन्दिरं प्रति प्रस्थितवान् । दिने सः बहिः स्थित्वा रात्रौ अरण्यं प्रविश्य मन्दिरं प्रति गतवान् । गाढं निद्रां कृतवती दुर्भिक्षदेवता सुकीर्तेः आगमनं न ज्ञातवती एव ।

कालिकामन्दिरं गतः सुकीर्तिः सरोवरे स्नानं कृत्वा भक्त्या कालिकादेवीम् अर्चित्वा तस्याः हस्ते विद्यमानं खड्गं स्वीकृत्य प्रस्थितवान् । अनुक्षणं आकाशे मेघाः उद्भूताः । भूमिम् एव प्लावयन्ती इव वृष्टिः अपि आरब्धा ।

निरन्तरं दिनत्रयं यावत् यदा वृष्टिः आगता तदा सुकीर्तिः खड्गं पुनः नीत्वा देव्याः हस्ते एव स्थापितवान् । तावति काले राज्ये सर्वत्र कूपाः, सरोवराणि, नद्यः च जलेन पूर्णाः आसन् । वृष्ट्याः आगमनेन



दुर्भिक्षदेवता अपि अनन्यगतिकतया ततः पलायनं कृतवती । प्रजाः सर्वे सुकीर्तिं बहुधा श्लाघितवन्तः ।

सर्वत्र सुकीर्तेः प्रसिद्धिं दृष्ट्वा सुकेशे असूया उत्पन्ना । सः चिन्तितवान् यत् सुकीर्तिना कृतात् कार्यात् अपि श्रेष्ठं कार्यं कृत्वा मया प्रजानां श्लाघनं प्राप्तव्यम् इति । एवं विचिन्त्य सः अनन्तरदिने प्रातःकाले एव कालिकामन्दिरं प्रति गतवान् । तत्र अन्तर्गृहतः अक्षय्यपात्रं स्वीकृत्य राजधानीम् आगत्य सः सडिण्डिमघोषम् उद्घोषणं कारितवान् - ''भोः प्रजाः ! भवद्भिः उदरनिमित्तं अहर्निशं बहुधा क्लेशः अनुभोक्तव्यः भवति । अतः महाराजेन भवतां निमित्तं राजधान्यां पञ्चभक्ष्य-परमान्नानां व्यवस्था कृता अस्ति । भवद्भिः



यदा सः मन्त्रिणः आहूय तान् कारणं पृष्टवान् तदा ते उक्तवन्तः - ''राजन्, भवान् अविचार्य सहसा निर्णयं यत् स्वीकृतवान् तत् युक्तं न अभवत् । तस्य अक्षय्यपात्रस्य आनयनेन एव एतादृशी परिस्थितिः उत्पन्ना अस्ति । तेन किञ्चिदपि प्रयोजनं न अभवत् । विवेकिनः सर्वे भवन्तं बुद्धिहीनं भावयन्तः सन्ति । अतः भवता अधुना किमपि अपूर्वं कार्यं कृत्वा जनानां प्रीतिः सम्पादनीया । अन्यथा प्रजाः केषुचित् एव दिनेषु भवतः अनुजम् एव अधिकम् इच्छेयुः'' इति ।

अनुजस्य नामश्रवणेन एव कुपितः सुकेशः अनुक्षणम् अक्षय्यपात्रं नीत्वा मन्दिरे अन्तर्गृहे संस्थाप्य ततः अक्षताः आनीय सर्वत्र भूमौ क्षिप्तवान् । अनुक्षणं तत्र सहस्रशः सैनिकाः उत्पन्नाः ।

अनन्तरं सुकेशः मन्त्रिणः सेनाधिपतीन् च आहूय तेषां सभाम् आयोज्य - ''अधुना मम समीपे महती सेना अस्ति । अतः तस्याः साहाय्येन अहं प्रतिवेशिराज्यानि सर्वाणि जेतुं शक्ष्यामि । चक्रवर्ती अपि भविष्यामि । तेन सह अपारा सम्पत्तिः अपि अस्मदधीना भविष्यति । अतः जैत्रयात्रार्थं सर्वाः सज्जताः क्रियन्ताम् । सर्वत्र जयः यदा प्राप्यते तदा मम पराक्रमः कीदृशः इति प्रजाः अपि ज्ञास्यन्ति'' इति उक्तवान् ।

योजनायाः सज्जीकरणस्य अनन्तरं दशदिनाभ्यन्तरे अन्यराज्यस्य उपरि आक्रमणात् पूर्वमेव धान्यागारे विद्यमानः आहारसङ्ग्रहः, कोषे विद्यमानं धनं च व्ययितम् अभवत् । तदा सुकेशः समस्यां

श्वः आरभ्य राजभवनं प्रति आगम्यते चेत् पर्याप्तम् । तत्र भोजनं सिद्धं लभ्यते । भवन्तः दिने त्रिवारम् अपि आगत्य भोजनं कर्तुम् अर्हन्ति'' इति ।

अनन्तरदिनतः राजभवने भोजनव्यवस्था आरब्धा । जनाः सर्वे प्रातः, मध्याह्ने, रात्रौ च आगत्य यथेष्टं भुक्त्वा कार्येण विना यथेष्टं निद्रां कुर्वन्ति स्म । एवं सति अचिरात् एव सर्वाः प्रजाः अलसाः सञ्जाताः । अहोरात्रं निद्रां कृत्वा ते उन्मत्ताः इव अभवन् ।

तदा कदाचित् राज्ये भ्रमणाय गतवान् सुकेशः पर्यटनसमये श्मशानसदृशतां गतं राज्यं दृष्ट्वा दिग्भ्रान्तः अभवत् । कृषिकार्यं, पशुपालनादिकं च सर्वथा स्थगितम् आसीत् ।

सम्मुखीकर्तुम् अशक्नुवन् यदा चिन्तयन् आसीत् तावति काले एव सर्वे सैनिकाः अक्षतरूपेण परिवर्तिताः अभवन् एव ।

तेन सुकेशः उन्मत्तः इव एव व्यवहरन् - "मम राज्यमपि मास्तु । ततः उत्पद्यमानाः समस्याः अपि न अपेक्षिताः । राज्यं मम अनुजाय यच्छन्तु । सः यथेष्टं शासनं करोतु नाम । मम तु अधुना विश्रान्तिः आवश्यकी" इति उक्त्वा ततः निर्गतवान् एव ।

अनुक्षणं मन्त्रिणः सेनाधिपतयश्च सुकीर्तेः समीपं गत्वा प्रवृत्तं सर्वं निवेद्य - "महाराज ! भवता अधुना मन्दिरं गत्वा अक्षय्यपात्रम् आनीय अक्षताः सैनिकरूपेण पुनश्च परिवर्तनीयाः । पश्चात् युद्धं कृत्वा सर्वान् जित्वा चक्रवर्तिना भवितव्यम्" इति प्रार्थितवन्तः ।

तदा विवेकी सुकीर्तिः तेषां प्रार्थनाम् अनङ्गीकुर्वन् उक्तवान् - "इदानीं समस्या या अस्ति सा आदौ परिहरणीया अस्ति । मया तु चक्रवर्तिना भवितव्यं नास्ति । अक्षय्यपात्रस्य कारणेन एव राज्ये सर्वे अलसाः सञ्जाताः सन्ति । प्रजाः सर्वाः यदि पुनश्च स्ववृत्तिम् आरभन्ते तर्हि सर्वं सम्यक् भविष्यति । अतः सर्वत्र उद्घोषणं कारयन्तु यत् अद्य आरभ्य एव राज्ये सर्वैः स्ववृत्तिः आरब्धव्या, अन्यथा कारागृहे कठिनशिक्षा अनुभोक्तव्या इति । मन्दिरे यानि अपूर्वाणि वस्तूनि सन्ति तानि तत्रैव भवन्तु । यदा दुर्भिक्षादयः अपरिहार्याः समस्याः उद्भविष्यन्ति तदा एव तेषाम् उपयोगः करणीयः" इति ।

सुकीर्तेः वचनेन सन्तुष्टाः मन्त्रिणः सेनाधिपतयश्च - "राजन् ! भवतः आज्ञां वयं शिरसा पालयिष्यामः । इदानीमेव राज्ये सर्वत्र उद्घोषणं कारयिष्यामः यत् सर्वैः चतुर्विंशतिघण्टाभ्यन्तरे स्वकार्यस्य आरम्भः करणीयः । अन्यथा कठिनदण्डः विधीयते इति" इति उक्तवन्तः ।

तदनुगुणम् एव राज्ये उद्घोषणं कारितम् । तादृशम् उद्घोषणं श्रुत्वा प्रजाः सर्वाः आलस्यं परित्यज्य कार्यम् आरब्धवत्यः । पश्चात् सुकीर्तिः उत्तमरीत्या राज्यपरिपालनं कुर्वन् प्रजाः च पुत्रवत् पश्यन् अग्रजेन सह दीर्घकालं यावत् आनन्देन जीवितवान् ।



# चित्रशीर्षिकास्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ? समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -



चन्दमामा
(संस्कृतम्)
'अक्षरम्'
८ उपमार्गः
गिरिनगरम्
बेङ्गलूरु - ५६००८५





युक्ता शीर्षिका जनवरी-२५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका द्विसहस्रतमवर्षस्य मार्चमासे प्रकाशयिष्यते ।

## अभिनन्दनानि



'मे'मासस्य स्पर्धायाः शीर्षिकाप्रेषिका -
*सुधा नायक्, पो - कडबाळ,*
*ता - शिरसि - ५८१ ४०२ (उ.क.)*



*प्रथमचित्रम्* - **अयम् अस्ति उपायः मैत्रीं प्राप्तुम् ।**
*द्वितीयचित्रम्* - **क्व यामि शिशुकः मैत्रीप्राप्त्यै ।**

